णः रूपान्तरं तद्विषयकविज्ञानादिनिष्ठाश्च दूषयन्ति पूर्वसूरिणः केचित्। इदं हि पुनः सत्यं वर्त्म भवति, यदधिष्ठाय मानवाः सर्वमूलं सनातनं धर्मं जानन्ति, इति सत्यासत्यपदार्थं व्याख्याति खण्डरहस्ये भगवांश्च हंसयोगी। श्रूयते हि धर्मद्वैविध्यं प्रवृत्तिर्निवृत्तिरिति। अस्ति च ब्रह्मैव हि सर्वधर्मवाच्यम्, सन्ति च कर्माण्यपि धर्ममूलानि, भवतस्ते वर्त्मनी द्वे सर्वकर्मकरणे। तस्माद्वादिनिग्रहाय पूर्वसूरिभिः तत्तन्मताग्रहेण संप्रसादितेषु प्रबन्धेषु चैवंविधाया गीतायास्तवर्णनेन ह्यप्रामाण्यकथनं न्यायविरुद्धमिति सम्यग्विज्ञायते। श्रीभगवत्पादाचार्यैरपि स्वकृतश्रीभगवद्गीताभाष्योपोद्घातप्रबन्धे तु "भगवान्सृष्ट्वेदम्" इत्यारभ्य "तद्विवरणे यत्नः क्रियते मया" इत्यन्तैश्च प्रबन्धैः, नरनारायणगीतादियोगगीतान्तानाञ्च गीतानामर्थविशेषाः शब्दतो ह्यर्थतश्च मनाक्सूचिता भवन्तीति युक्तैश्च प्रमाणैर्बहुभिर्विज्ञायते। किञ्च "नारायणः परोऽव्यक्तात्" इत्यारभ्य "तद्विवरणे यत्नः क्रियते मया" इत्यन्ताश्च प्रबन्धा एव श्रीशङ्करभगवत्पादविरचिता इति, ततः परे च प्रबन्धाः समुपलभ्यमानाः श्रीशङ्कराचार्योऽप्रणीता इति, श्री शङ्करविरचितगीताभाष्यञ्चान्यदाधुनिकैरशुद्धार्यैस्सुसंरक्षितमस्तीति च विज्ञायते। यच्चात्र वक्तव्यं तदस्मद्गीताभाष्यखण्डरहस्योपोद्घातप्रबन्धे विशेषतो ह्यभिवर्णितं भवति। तस्मात्प्रमाणशरणैः पुनरेषा शुद्धाचार्यसुपरिष्कृता श्रीभगवद्गीता स्वीकार्या भवत्येव।

तत्र च प्रथमे ह्यध्याये, सर्वेषां संसारिणां तदीशानाञ्च तत्तत्काल-

देशोचितकर्तव्याभ्युदयसाधनतमस्वस्वरूपानुरूपकर्मनिष्ठाधिकारसंपादनार्थम्, भगवता प्रथमं हि समुपदिष्टो भवति सर्वावश्यको मुख्यश्च ब्राह्मथाः शक्तेः स्वीकारः। ततस्तथाभिहितश्च, शक्तानां ह्यधिकारिणाम्, व्यवसायेषु, स्वस्वरूपानुरूपे च कर्तव्ये कर्मणि, परस्परं तत्तत्कालावश्यकस्वस्थानानुरूपकर्तव्यधर्मविद्याविवादावश्यकत्वम्, तत्रत्यदिव्योक्तिप्रत्युक्तिभिः। ततस्समुपदिष्टं च भवति सर्वाधिकारवेद्यं ब्राह्मोपनयनाङ्गभूतं सदाचार्यसमाश्रयणञ्च सशिष्यलक्षणम्। अथ चारभ्य द्वितीयाध्यायादध्यायानां चतुर्विंशतिभिः, गायत्र्यर्थवाच्यानां सर्वसांसारिकजनस्वानुरूपव्यवसायाधिष्ठानभूतानाञ्च तत्वचतुर्विंशतीनां तथा तत्तत्वानां प्रत्येकमधिष्ठितस्य पुरुषस्य च स्वरूपम्, यथाधिकारं यथाक्रमं सरहस्यं सुसङ्गतञ्च समुपदिष्टं भवति भगवता श्रीवासुदेवेन। अथाध्याये च षड्विंशे, एवं सर्वतत्वार्थोपदेष्टरि सर्वान्नतमे च तस्मिन् भगवति शिष्यभावमापन्नेनार्जुनेन सविज्ञानं सकार्तज्ञञ्च प्रोक्तः परब्रह्मस्वरूपश्रीकृष्णस्तवराजः, तथा श्रीगीतोपदेशसमये तत्वार्थविज्ञानार्थं समुपागतानां च सर्वेषामधिकारिणामुत्तमेनाधिकारिणा ब्रह्मदेवेन संप्रोक्तः स्वसदाचार्यप्रसादसमुपलब्धदिव्यचक्षुष्मता च महायोगिना सञ्जयेन स्वस्वरयोगेनोपलब्धः, तेनैव च सर्वार्थभावाभावस्वरूपविवेकनिष्ठाविधुराय तत्वजिज्ञासवे च राज्ञे जात्यंधाय धृतराष्ट्राय सकृपावगाढं समुपदिष्टश्च स्तवराजः प्रतिपादितो भवति। अत्र च भगवान्नारदः—

"पुरा भगवता प्रोक्ता या गीता योगलक्षणा ।
सा हि षड्विंशदध्यायैः गुंभिता कृष्णयोगिना ॥

आद्यन्ताभ्याञ्च व्याख्यातो ह्यध्यायाभ्यां महामनुः ।
प्रणवश्च यथातत्वं तदर्थश्चेत्थमेव हि ॥

आद्यो यः प्रणवः प्रोक्तः सर्वविद्यासु तस्य हि ।
देवी ब्राह्मी महाशक्तिः प्रथमं तत्वमुच्यते ॥

विद्या सांसारिकी सा च द्वितीयं तत्वमुच्यते ।
भास्वता ज्ञानदीपेन नाशयन्भूतभावनः ॥

अज्ञानजं तमः कृत्स्नमात्मभावस्थितः परः ।
सोऽयं पुमान्तृतीयं स्यात्तत्त्वमित्यवधार्यताम् ॥

स्वीकारश्च तथा चर्चा प्राप्तिश्चैव यथाक्रमम् ।
त्रयाणामुक्ततत्वानामर्थो विद्यावतां भवेत् ॥

समष्टिव्यष्टिरूपञ्च सर्वमूलं सनातनम् ।
कारणं विश्वरूपञ्च सर्वातीतं गुहाशयम् ।

अन्त्यप्रणववाच्यं स्यादात्मानात्मस्वरूपवत् ।
चत्वारि चास्य तत्त्वानि तत्स्वरूपमिदं शृणु ॥

ज्ञानमिच्छा क्रिया चैव समाहारस्तथा परः ।
प्रयोजनन्तथैतेषामित्थं ज्ञेयं मनीषिभिः ॥

ज्ञानं ध्यानं तथा कर्म शुद्धं विज्ञानमेव च ।
इत्यध्याये च षड्विंशे स्तुतं ब्रह्म परावरम् ॥"

इति प्रथमचरमाध्यायविज्ञानप्रयोजनं सम्यगभिहितं भवति । इत्थं हि किल शुद्धाचार्याः भीष्मपर्व सविमर्शं परिष्कुर्वन्ति—इयं भगवद्गीता हि महाभारते षष्ठे भीष्मपर्वणि ग्रथिता भवति कृष्णद्वैपायनेन । भीष्मपर्व हि—

" जंबूखंडविनिर्माणं पर्वोक्तं तदनन्तरम् ।
दिव्यं चक्षुर्ददौ यत्र सञ्जयाय महामुनिः ॥
भूमिपर्व ततः प्रोक्तं द्वीपविस्तारकीर्तनम् ।
पर्वोक्तं भगवद्गीता पर्व भीष्मवधस्ततः ॥"

इति भारतादिपर्ववचनादेव ह्यत्रान्तरपर्वभिश्चतुर्भिरन्वितं भवति । तथा तद्भीष्मपर्वाध्यायश्लोकसंख्याश्च—

" अध्यायानां शतं प्रोक्तं तथा सप्तदशापरे ।
पञ्चश्लोकसहस्राणि संख्ययाऽष्टौ शतानि च ॥
श्लोकाश्च चतुरशीतिरस्मिन्पर्वणि कीर्तिताः । "

इति भारतवचनादेव संप्रदर्शिता भवन्ति । तथा भीष्मपर्वणि प्रत्यवान्तरपर्व चाध्यायानां हि संख्या गोभिलकारिकायाम्—

" आद्ये च गदिता, ह्यष्टावध्यायाश्च महर्षिणा ।
एकोऽध्यायो द्वितीये हि तेन प्रोक्तश्च पर्वणि ।

अध्यायानां तृतीये हि त्रयस्त्रिंशत्ततः परम् ।
अध्यायानां चतुर्थे हि पञ्चसप्ततिराहृता ॥"

इति संप्रतिपादिता भवतीति । इत्थं हि किल भगवद्गीतापर्वविषयानुक्रमणिका—"अथ गावल्गणिर्विद्वान्" इत्यारभ्य "एतान्यनीकानि महानुभावम्" इत्यन्तेनाध्यायषट्केण कुरुपाण्डवसेनासन्निवेशप्रकारः समुपपादितो भवति । ततो "धर्मक्षेत्रे कुरुक्षेत्रे" इत्यारभ्य हि "यत्र योगीश्वरः कृष्णो" इत्यन्तेनाध्यायानां च षड्विंशत्या साङ्गा च श्रीभगवद्गीता सूपपादिता भवति, ततश्चैकेनाध्यायेन च चरमेण गीतावैभवः प्रतिपादित इति । तथा च भीष्मपर्वणि चत्वार्यवान्तरपर्वाणि, सप्तदशाधिकशतसंख्या ह्यध्यायाः, चतुरशीत्युत्तराष्टशताधिकपञ्चसहस्रश्लोकाश्च सन्तीति हि विज्ञायते महाभारतवचनात् । वर्तमानभारतकोशेषु चैवं न दृश्यते । सत्येवं प्रमाणशरणाः श्रीमहाभारतरहस्यार्थविवेकजिज्ञासवः किं करिष्यन्ति । सुपरिष्कृतश्च महाभारतप्रबन्धः संरक्षितोऽस्ति शुद्धार्येरिति हि विज्ञायते । एवं सुपरिष्कृतैव श्रीभगवद्गीता तथा परिष्कृतमहाभारतान्तर्गता भवतीति सप्रमाणं निरूपयति भगवान्हंसयोगी खण्डरहस्ये गीताभाष्ये । तस्माच्छुद्धार्यविद्यापरिष्कार एव तत्तात्पर्यविषयो भवतीति तु समञ्जसमेव । अस्यां षड्विंशतिभिरध्यायानां यथाक्रमं—गीतावतारः, नरनारायणधर्मः, अवतारधर्मः, आधिकारिकधर्मः, अधिकारिवेद्यशिक्षाधर्मः, कारणविज्ञानधर्मः, तद्विज्ञानिनां प्राप्यकैवल्यधर्मः, एवं प्रथमज्ञान-

काण्डषट्कनिष्ठानां स्वरूपनिरूपकधर्मः, तेषां साधनत्रयविज्ञानधर्मो ह्यधिकाररूपः, एवं साधनत्रयनिष्ठानां शिक्षारूपो मायाधर्मः, तथा शिक्षितानां प्राप्तिकारणमोक्षधर्मः, तथा मुमुक्षूणां ध्येयकैवल्यनाथब्रह्मस्वरूपधर्मः, स्वसत्यसङ्कल्पेन बहुधा विजायमानत्वरूपनरनारायणधर्मः, एवं द्वितीयकाण्डषट्कनिष्ठानां कर्मनिष्ठारूपप्राणायामधर्मः, तेषां विज्ञेयश्च परमात्मधर्मः, तथा चाक्षरधर्मः, तद्विद्याधर्मः, परमहंसाधिकारधर्मः, स्वसंन्यासधर्मः, एवं तृतीयकाण्डषट्कनिष्ठानां योगहेतुश्च आत्मधर्मः, तथा प्रकृतिधर्मः, तत्तद्विशेषकर्मधर्मः, तथा ज्ञानधर्मः, तथा सर्वकाण्डनिष्ठासमधिगम्ययोगधर्मः, ब्रह्मस्वरूपविज्ञानधर्मः स्तुतिरूपश्च गदितो भवतीति विज्ञेयम् । एवं चतुर्विंशतीनां गीतानां पादचतुष्टयनियमेन प्रथमे ज्ञानपादे षडध्यायाः, तथा द्वितीये सङ्कल्पपादे, तृतीये कर्मपादे, तुरीये योगपादे चाध्यायसंख्यानियमः । अध्यायस्य काण्ड इति व्यवहारश्च शुद्धार्यसमयसिद्धः । तदुक्तं रामायणखण्डरहस्ये हंसयोगिना—"नरनारायणधर्मः प्रथमे बालकाण्डे, द्वितीये ह्ययोध्याकाण्डे चावतारधर्मः, तृतीये पुनरारण्यकाण्डे ह्यधिकारधर्मः, चतुर्थे किष्किन्धाकाण्डे शिक्षाधर्मः, पञ्चमे च काण्डे सुन्दरे कारणविज्ञानधर्मः, षष्ठे पुनर्युद्धकाण्डे कैवल्यधर्मः, प्रतिपादमेते धर्माः भिन्नक्रियार्थाः विपरिणमन्ते, विशेषतो ह्यध्येयत्वेन काण्डानामध्याय इति व्यावहारमाचरति नारदः, तत्तत्त्वार्थप्रकाशको हि काण्डो विज्ञायते, श्रीभगवद्गीतापि षट्का-

ण्डपादचतुष्टयवती भगवती शुद्धयोगब्रह्मविद्या भवति" इति । किञ्चास्या भगवान् हंसयोगी, प्रतिपादमेते धर्माः भिन्नक्रियार्थाः विपरिणमन्ते इत्यत्र——

"नरनारायणाद्याश्च कैवल्यान्ता महर्षयः ।
प्रतिपादं षडेते च धर्मा भिन्ना विभांति हि ॥"

इति नारदवचनं प्रमाणयति ।

"एवं काण्डषट्केऽपि श्रीरामायणे पादचतुष्टयनियमः, यथा पादमुक्तकाण्डषट्कनियमश्च दृश्यते । नरनारायणधर्मादयश्च षडेते प्रतिपादं यथाधिकारं विशेषनिष्ठया भिन्ननामानो विपरिणमन्ते । तथा हि——नरनारायणधर्मविज्ञानात्स्वरूपध्याननिष्ठाविज्ञानम्, तस्मात्प्राणायामकर्मनिष्ठाविज्ञानम्, तस्माद्दात्मयोगनिष्ठाविज्ञानञ्च भवति । एवमवतारधर्मविज्ञानात्स्वरूपानुरूपसाधनत्रयनिष्ठाविज्ञानम्, तस्मात्परमात्मविज्ञाननिष्ठा, तस्याः प्रकृतिधर्मविज्ञाननिष्ठा च सञ्जायते । तथाऽधिकारविज्ञाननिष्ठायाः मायाविज्ञाननिष्ठा, तस्याः अक्षरविज्ञाननिष्ठा, तस्याः कर्मनिष्ठा च संभवति । एवं शिक्षास्वरूपविज्ञानान्मोक्षस्वरूपविज्ञाननिष्ठा, तस्याः राजविद्याविज्ञाननिष्ठा, तस्याः भक्तिस्वरूपविज्ञाननिष्ठा च समुत्पद्यते । एवं च कारणविज्ञाननिष्ठायाः ब्रह्मस्वरूपविज्ञाननिष्ठा, तस्याः परमहंसविज्ञाननिष्ठा तस्याः शुद्धविज्ञाननिष्ठा च प्रभवति । एवं कैवल्यनिष्ठायाः ब्रह्मविभूतिविज्ञानम्, तस्मात्संन्यासधर्मविज्ञाननिष्ठा, तस्याः योगनिष्ठा च संभवत्यधि-

कारिणाम् " इति श्रीरामायणखण्डरहस्ये षण्णां नरनारायणधर्मादीनां यथापादमुक्तं विपरिणामं व्याजहार भगवान् हंसयोगी। तस्माच्चतुर्णां संसारिणां ज्ञानभक्तिकर्मयोगनिष्ठानां यथावस्थं विज्ञेया ह्यर्थविशेषाश्च षट्प्रकाराः श्रीभगवद्गीतायामस्यां श्रीकृष्णमूर्तिना " अशोच्यानन्वशोचस्त्वम् " इत्यारभ्य " मोक्षयिष्यामि मा शुचः " इत्यन्तैः षट्सप्तत्युत्तरपंचशतैश्च श्लोकैः प्रतिपादिता भवन्तीति विज्ञेयम्। एवं भगवदुपदिष्टां तत्वार्थपरां च योगब्रह्मविद्यां श्रीभगवद्गीतां तत्वजिज्ञासवे राज्ञे धृतराष्ट्राय प्रोवाच महायोगी संजयः, इति मध्येमहाभारतं गीतावतारसङ्गतिर्विज्ञेया भवति मुमुक्षुभिः परप्रेप्सुभिः।

कावेतौ भगवन्तौ योगब्रह्मविद्याप्रकटने गुरुशिष्यस्थानमधिष्ठितौ कृष्णार्जुनौ इति शंकायामित्थं हंसयोगी—

" कृष्णार्जुनौ महादेवौ विद्धि तौ धर्मनायकौ।
नारायणनरांशौ च* महाभारतसंस्तुतौ॥ "

इति सनातनधर्मदीपिकायामाह। किं च श्रीकृष्णशब्दार्थश्च—

* पार्थकृष्णयोर्नरनारायणस्वरूपत्वं च महाभारते आदिपर्वणि चतुष्षष्टितमेऽध्याये, वनपर्वणि चतुर्दशीतितमेऽध्याये, उद्योगपर्वणि एकोनपञ्चाशेऽध्याये, भीष्मपर्वणि त्रयोविंशेऽध्याये, अष्टषष्टितमेऽध्याये च, अनुशासनपर्वणि द्विपञ्चाशदधिकद्विशततमेऽध्याये च, प्रतिपादितं भवति।

"कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः ।
विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्वतः ॥"

इति महाभारतोद्योगपर्वणि एकोनसप्ततितमेऽध्याये निरूपितो भवति । ततः सर्वसंसारव्यवसायधर्मगोप्ता हि श्रीकृष्ण इति विज्ञायते ।

अत एव महाभारतादिपर्वणि प्रथमाध्याये "यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम्" इति सौतिः प्रतिज्ञाय

"भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥

शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् ।
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः ॥"

इत्यनुशास्ति । अतो नरनारायणश्रीकृष्णप्रोक्तधर्म एव प्रतिपाद्यत्वेन विषयो भवतीति विज्ञायते । अत्र च "यस्य सङ्कल्पनायकस्य भगवतो वासुदेवस्य दिव्याणि कर्माणि सर्वसंसारव्यवसायधर्मस्वरूपोपदेशरूपाणिच, सत्यं च धर्म ऋतं च धर्म पवित्रं च धर्म पुण्यं च धर्म शाश्वतब्रह्मपरध्रुवज्योतिस्वरूपसनातनधर्म च ज्ञानिनां कथयन्ति, धर्माः षडेते नरनारायणधर्मादीनां च षण्णां धर्माणां जीवरूपा भवन्ति" इति खण्डरहस्यम् । तस्मात्प्रतियुगं धर्मसंरक्षणार्थं नानारूपेणाऽवतीर्णौ पार्थपार्थसारथी, नरनारायणाविति विद्वद्भिः विज्ञेयम् ।

एवं रीत्यैव हि गीताश्चान्याश्चतस्त्रः शुद्धैरभ्युपगम्यते । ताश्च पुनः —श्रुतिगीता तैत्तरीयारण्यकान्तर्गता, ब्रह्मगीता ईशावास्यादिसौ-भाग्यलक्ष्मीपर्यन्तानामेकोनपंचाशदामुपनिषदामन्तर्गता, ततश्चार्षगीता श्रीरामायणांतर्गता, शुद्धगीता शुद्धार्यपरिष्कृतदेवीभागवतान्तर्गता इति भवन्ति । ब्रह्मगीतोपनिषदः (१) ईशावास्य, (२) कठ, (३) केन, (४) प्रश्न, (५) मुण्डक, (६) माण्डूक्य, (७) तैत्तरीय (८) ऐतरेय (९) छांदोग्य, (१०) बृहदारण्यक (११) कैवल्य, (१२) ब्रह्म (१३) श्वेताश्वतर, (१४) हंस, (१५) नारायण (१६) परमहंस, (१७) मैत्रेयी (१८) सर्वसार (१९) निरालंब (२०) वज्रसूची (२१) तेजोबिंदु (२२) नादबिंदु (२३) ध्यानबिंदु (२४) ब्रह्मविद्या (२५) योगतत्व (२६) आत्मबोध (२७) नारदपरिव्राजक (२८) त्रिशिखिब्राह्मण (२९) सीता (३०) दक्षिणामूर्ति (३१) निर्वाण (३२) मण्डलब्राह्मण (३३) संन्यास (३४) अव्यक्त (३५) अध्यात्म (३६) आत्म (३७) देवी (३८) रामरहस्य, (३९) स्कन्द, (४०) महानारायण, (४१) सूर्य (४२) रुद्रहृदय, (४३) भावना, (४४) पंचब्रह्म, (४५) कृष्ण, (४६) वराह, (४७) मुक्तिक, (४८) कलिसंतरण (४९) सौभाग्य, इति प्रसिद्धाः एकोनपञ्चाशदो भवंति ॥

—प्रकृतमनुसरामः एवं शुद्धार्यसुपरिष्कृता श्रीभगवद्गीतापि काचिदस्तीति प्रथमं ह्यस्मदार्यमातामहादेवावगतम् । अस्मन्मातामहश्च शुद्धधर्मसमय इति सर्वत्र विदितमेव । अत्र वक्तव्यमन्यदितिवृत्तं

सनातनधर्मदीपिकोपोद्घातप्रबन्धे 'नाकयोगी तथाऽर्जुनः' इत्यस्य सविमर्शमर्थनिरूपणावसरे निरूपितं भवत्यस्माभिः। स च मातामहः तिरुविन्दळूर् श्रीमदुभयश्रीवेङ्कटाचार्याख्यः, गीतायाश्चास्याः स्वानुसन्धानार्थं श्लोकपादानुक्रमणिकां काञ्चिदलिखत्, तदवलंब्य, तथा स्वामियोगानन्दशङ्करानन्दभवानन्दानां अन्येषां शुद्धार्याणां कोशांश्चावलंब्य सुपरिष्कृतेयं। तामिमां हि भगवतीं योगब्रह्मविद्यां भगवद्गीतां, सारासारविवेकिपरिबृढाः अत्रत्यशुद्धधर्ममण्डलकार्यदर्शिनः डाक्टर् सर्. यस्. सुब्रह्मण्यार्या एव प्रथमं विदुषां सतां मनः समानेतुमैच्छन्। तदनुरूपमिदं सच्च कैङ्कर्यमस्माकम, यन्मुद्रापयित्वेमां विख्यापनम्। समये हि गोभिलकारिकाश्चापि शुद्धार्यैरस्माकं प्रेषिता अभवन्। साकं चैव भगवद्गीतया योगब्रह्मविद्यया ह्येताः महर्षिगोभिलशुद्धादिव्यप्रतिभाप्रसूताः शुभार्थाश्च समायाता भवन्ति ॥

तस्मादिमां भगवतीं योगब्रह्मविद्यां शुद्धसमया वयं समधिगम्य सुकृतार्था भवेम, इत्यस्माभिः सर्वेश्वरस्सर्वसाक्षी च भगवान् सर्वात्मस्वरूपः श्रीवासुदेवः प्रार्थ्यते ॥

श्रीकृष्णं परमात्मानं शरणागतवत्सलन् ।
धर्मद्वयोपदेष्टारं ब्रह्मतत्मन्नतोऽस्म्यहम् ॥

इत्यम्

श्रीशुद्धार्यदासः

पण्डित के. टि. श्रीनिवासाचार्यः




शुद्धयोगब्रह्मविद्यायाः

# श्रीभगवद्गीतायाः

## पारायणक्रमः

---

भरद्वाज उवाच

सुब्रह्मण्य महाभाग नमस्ते लोकनायक ।
कथं योगब्रह्मविद्या गीताऽध्येया मनीषिणा ॥ १ ॥

का वा गीतोचिता पूजा कदा सेव्याऽस्ति सा सता
ज्ञातुमिच्छाम्यशेषेण वदस्व कृपया विभो ॥ २ ॥

सुब्रह्मण्य उवाच

भरद्वाज महाभाग पृष्टन्तुभ्यं वदाम्यहम् ।
युगे युगे तु भगवान्नारदाय महामुने ॥ ३ ॥

गीतासेवां यथातत्वं व्याजहार युगप्रभुः ।
तामेवाद्य प्रवक्ष्यामि शृणुष्व मुनिपुङ्गव ॥ ४ ॥

दासः काल्ये समुत्थाय कृत्वा स्वाह्निकमुत्तमम् ।
प्रक्षाल्य पाणिपादञ्च धृताकल्पः प्रसन्नधीः ॥ ५ ॥

तिष्ठन्बद्धाञ्जलिर्देवमात्मानं परिबुध्य हि ।
सङ्कल्पनायकञ्चैवं प्रणमेद्भक्तिभावतः ॥ ६ ॥

सङ्कल्पनायकस्तवः ।

श्रीं देवीं तां योगदेवीन्तत्सङ्कल्पप्रभुं नरम् ।
शुद्धसङ्कल्पनाथञ्च नारायणमुपास्महे ॥ ७ ॥

लोकाधिकारिणश्चान्यान्नारदाद्यानृषीन्त्रयम् ।
तथा प्राचीनहंसांश्च प्रणमामो यथाबलम् ॥ ८ ॥

श्रीकृष्णार्जुनध्यानस्तवः

नरनारायणाज्जातौ जगतस्स्थितये स्थितौ ।
शुद्धसङ्कल्पनाथौ च वन्दे कृष्णार्जुनौ सदा ॥ ९ ॥

एवमुक्त्वा प्रणम्याथ गायत्रीन्यासमाचरेत् ।

तदित्थम् ।

अस्याः श्रीयोगविद्यायाः भगवद्गीतायाः नरनारायणऋषिः, गायत्री छन्दः, श्रीयोगब्रह्मविद्या देवता, योगब्रह्मविद्याप्रसादसिध्यर्थे गीतापारायणक्रियाजपे विनियोगः ।

ध्यानम् ।

चतुष्पदीं धर्मविद्यां समत्वं गिरतीं सतीम् ।
परसामीप्यफलदां वन्दे गीतां शुभावहाम् ॥ १० ॥

षड्दर्शनपदां दिव्यां सर्वभावसमन्विताम् ।
कर्तव्यव्यवसायस्य निश्चयाय नतोऽस्म्यहम् ॥ ११ ॥

इति स्तुत्वा पुनर्बद्धाञ्जलिपुटः,

नमस्ते नरदेवाय नमो नारायणाय च ।
बदरीवननाथाय योगिनां पतये नमः ॥ १२ ॥

इति ध्यात्वा गीताकोशञ्च यथाशक्ति समभ्यर्च्य,

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १३ ॥

इति श्लोकपठनपूर्वकं श्रीभगवद्गीतां पठेत् ।

---

श्रीभगवद्गीतापारायणसमाप्तौ कर्तव्यविधिः। श्रीभगवद्गीताञ्च भक्त्या यथोचितं पठित्वा ततश्चोत्थाय पुनरपि,

"नारायणं नमस्कृत्य०

"चतुष्पदीं धर्मविद्यां०

"षड्दर्शनपदां दिव्यां

इति स्तुत्वा तत्फलं भगवते तस्मै समर्पयेत्

इति गीतापारायणक्रमः समाप्तः

---

ॐ नमः श्रीपरमर्षिभ्यो योगिभ्यः

महर्षिगोभिलविरचितः

# गीतार्थसंग्रहः॥

तत्र

## प्रथमोऽध्यायः

---

शुद्धधर्ममण्डलस्य धर्मशास्त्रं सनातनम् ।
यच्च गीताभिधं तद्वै व्याख्यास्यामो यथामति ॥ १ ॥

श्रीकृष्णवदनाम्भोजगलिताशेषतापनुत् ।
गीता चकास्ति षड्विंशदध्यायैरन्विता परा ॥ २ ॥

आद्ये गीतावतारोऽयमध्याये परिकथ्यते ।
पूर्तिं समेष्यति स्वात्तसङ्कल्पे कर्म चक्रतुः ॥ ३ ॥

स्वप्रधानपरं शुद्धं नरनारायणौ प्रभू ।
शुद्धसङ्कल्पनाथौ च तन्निबोधत वै द्विजाः ॥ ४ ॥

प्रारब्धे भारते युद्धे कृष्णो नारायणो विभुः ।
कार्यदर्शिनमाराध्यं नरं स्वांशं तथाऽर्जुनम् ॥ ५ ॥

आहूय पूर्वं तां ब्राह्मीं शक्तिं तस्मै समादिशत् ।
यां हि लोकास्तदीशाश्च प्राप्य स्वार्यप्रसादतः ॥ ६ ॥

व्यवसायं प्रकुर्वन्ति स्वकीयं सफलं भुवि ।
द्विविधश्च परा ब्राह्मी सा नाना परिकथ्यते ॥ ७ ॥

सर्वेषां कर्मणां सैव जीवभूता चकास्ति हि ।
द्विधाभूतस्तया शक्त्या निवृत्तेश्च प्रवृत्तितः ॥ ८ ॥

दैवीं शक्तिं निवृत्तश्च प्रवृत्तश्चासुरीन्तथा ।
आदधानश्च पार्थोऽयं लोकप्रतिनिधिर्गुरुः ॥ ९ ॥

लोकानाञ्च सुखं दुःखं सांसारिकमवेक्ष्य हि ।
कृपया परयाऽऽविष्टो शिष्यलक्षणलक्षितः ॥ १० ॥

जिज्ञासुस्तन्निवृत्तेश्च ह्युपायं योगशास्त्रतः ।
शुद्धसङ्कल्पनाथश्च कृष्णन्तं शरणं ययौ ॥ ११ ॥

इत्येवं प्रथमाध्यायसंग्रहार्थः प्रकीर्तितः ।

## द्वितीयोऽध्यायः ।

ततो भगवता तेन नारायणमहर्षिणा ॥ १२ ॥

कृष्णेन शुद्धसङ्कल्पकार्यकर्त्रेऽधिकारिणे ।
गायत्रीलक्षणा गीताः कथितास्तत्त्वदर्शनाः ॥ १३ ॥

पार्थाय लोकशास्त्रे च सोल्लासं सविमर्शनम् ।
नरनारायणधर्मगीताऽऽख्या तत्र कीर्तिता ॥ १४ ॥

अध्याये च द्वितीयेऽस्याः प्रेप्सुभिश्च परं पदम् ।
मुमुक्षुभिः सुसेव्या स्यादवश्यं मुनिपुङ्गवाः ॥ १५ ॥

## तृतीयोऽध्यायः ।

गीतायाश्च तृतीयेऽस्मिन्नध्याये कृष्णयोगिना ।
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ॥ १६ ॥

धर्मसंरक्षणार्थाय यथादेशं यथायुगम् ।
शुद्धसङ्कल्पनाथार्च्यनारायणमहात्मना ॥ १७ ॥

रहस्यं ह्यवताराणां स्वीकृतानां यथायथम् ।
व्याख्यातं सप्रकारञ्च तद्धि सेव्यं महर्षिभिः ॥ १८ ॥

## चतुर्थोऽध्यायः ।

अध्यायेऽस्यास्तुरीये हि वासुदेवेन धीमता ।
अवतारसुसाध्याश्च ह्यधिकारा निरूपिताः ॥ १९ ॥

तत्र हि क्रमशः शुद्धसङ्कल्पेशपरात्मनः ।
ज्ञानिनाञ्चैव भक्तानां कर्मठानां यतात्मनाम् ॥ २० ॥

समाहारपराणाञ्च योगिनां हि महर्षयः ।
अधिकारो यथारूपं सप्रकारो निरूपितः ॥ २१ ॥

## पञ्चमोऽध्यायः

अध्याये पञ्चमेऽस्यास्तु वेद्यो योऽर्थोऽविकारिभिः ।
शिक्षारूपः स कथितः साङ्गं श्रीकृष्णमूर्तिना ॥ २२ ॥

तत्र च क्रमशः शुद्धविज्ञानस्याविकारिणः ।
सर्वमूलपरब्रह्मस्वात्मविज्ञानपूर्वकम् ॥ २३ ॥

स्थितप्रज्ञस्य निष्ठा च त्याज्योपादेयधीस्तथा ।
आत्मनो लक्षणञ्चैव सर्वोपाम्यस्य वै तथा ॥ २४ ॥

स्थानञ्चैव यथातत्त्वं सप्रकारमुदाहृतम् ।
तद्वै स्थानं योगिभिश्च वेद्यं स्यादिति निर्णयः ॥ २५ ॥

## षष्ठोऽध्यायः

षष्ठेऽध्याये तु गीतायाः शिक्षया शिक्षितस्य हि ।
उक्तया च परं वेद्यं परमं सर्वकारणम् ॥ २६ ॥

वर्ण्यते वस्तु देवेन नारायणमहर्षिणा ।
यच्च वा पुण्यपापानां परप्राप्तेश्च साधनम् ॥ २७ ॥

अत्र यत्कर्म चास्माभिः क्रियते सदसच्च यत् ।
तस्य सर्वस्य चोक्तानि कारणानीति बुध्यते ॥ २८ ॥

परन्तु पञ्चमस्तत्र पुरुषः प्रकृतेः परः ।
अन्तरात्मात्मभावो हि शुद्धयोगेन देहिनम् ॥ २९ ॥

चरन्तं गुणयोगेन स्वांशं शुद्धं स्वतो विभुम् ।
त्रियोतितेषु सर्वेषु कर्मस्वेवं नियोजयन् ॥ ३० ॥

सर्वस्वभावयुक्तो यो ह्यस्ति सर्वत्र निर्मलः ।
तस्य विज्ञानमेव स्यात्परप्राप्तिसुसाधनम् ॥ ३१ ॥

प्रवृत्तेश्च निवृत्तेश्च व्यवसायं करोति यः ।
स एव पश्यति प्राज्ञः जगतां कारणं परम् ॥ ३२ ॥

कारणं तत्परं ब्रह्म परमात्मा सचाक्षरः ।
आत्मा जीव इति प्राज्ञैः कथ्यते धर्मवर्त्मसु ॥ ३३ ॥

चतसृभिश्च देवीभिः- युक्तन्तद्विद्यते सदा ।
तदेव चान्नमन्नादमिति भाति स्वभावतः ॥ ३४ ॥

तत्कारणं परं वस्तु व्यवसायद्वयस्य हि ।
सिद्ध्यर्थं परिपूर्त्यै च योगिनः समुपासते ॥ ३५ ॥

ध्येयं यत्कारणत्वेन स्वरूपाच्च स्वभावतः ।
शुद्धं तद्ब्रह्म विज्ञानात्सर्वभावोपशोभितम ॥ ३६ ॥

अशुद्धमिश्रसत्वानाङ्कार्याणामीश्वरा गुणाः ।
गुणैर्विना न कर्ता स्यात्सोऽयमात्मा गुणात्परः ॥ ३७ ॥

इति कारणविज्ञानं पुरुषार्थसुसाधनम् ।
व्याख्यातं कृष्णदेवेन चैतद्वेद्यं मुमुक्षुभिः ॥ ३८ ॥

## अथ सप्तमोऽध्यायः

कारणज्ञानिभिर्वध्यो ह्यहङ्कारो दुरासदः ।
ततः कैवल्यमध्याये सप्तमेऽस्मिन्निगद्यते ॥ ३९ ॥

आत्मविज्ञानमेव स्यात्कैवल्यं योगलक्षणम् ।
आत्मा कैवल्यनाथः स्यात्परं ब्रह्म सनातनम् ॥ ४० ॥

स्वरूपं ब्रह्मणस्तस्य प्रथमं ह्यभिवर्णितम् ।
यश्च सर्वाणि भूतानि चैकमूलानि पश्यति ॥ ४१ ॥

स कैवल्यमवाप्नोति शुद्धं संन्यासलक्षणः ।
आत्मानात्मविवेकेन स्वधर्मेण च योगतः ॥ ४२ ॥

संसारस्य स्वरूपं हि सत्वमूलं गुणैर्युतम् ।
तमःफलं महारूपं सुखदुःखादिहेतु च ॥ ४३ ॥

सर्वरूपपरब्रह्मविज्ञानस्य हि कारणम् ।
ब्रह्मादिस्थानवाच्यं स्यात्स्वाध्यलक्षणलक्षितम् ॥ ४४ ॥

एवमात्मपरब्रह्मविज्ञानादेव योगिनः ।
विधूय पुण्यपापे च संसारावश्यके पुनः ॥ ४५ ॥

निरञ्जनाश्च शान्ताश्च सामीप्यं ब्रह्मणः परम् ।
भजन्ति साम्यवाच्यञ्च तदेव परमं पदम् ॥ ४६ ॥

आत्मानात्मनोर्योगेन नित्येन चाखिलं जगत् ।
वर्धते च यथाभावमेवं ज्ञेयं मनीषिभिः ॥ ४७ ॥

सांख्यानां ध्याननिष्ठानां कर्मठानां यतात्मनाम् ।
श्रेष्ठा कैवल्यनिष्ठा स्यादिति कैवल्यभाषितम् ॥ ४८ ॥

अथाष्टमोऽध्यायः ।

अथातश्चाष्टमाध्याये श्रीकृष्णेन महात्मना ।
धर्मः कैवल्यनिष्ठस्य तदन्यस्य च वर्ण्यते ॥ ४९ ॥

अत्र कैवल्यनाथस्य ह्यात्मनः परमात्मनः ।
ब्रह्मणः सर्वरूपस्य वेत्ता यः समभाववान् ॥ ५० ॥

कालदेशोचितं कर्म सर्वं सांसारिकञ्च यत् ।
असङ्गेन च कुर्वन्सो ह्युत्तमो दैवभाववान् ॥ ५१ ॥

यः कामेन तदुत्पन्नैः दोषैश्चापि प्रपीडितः ।
अनात्मविद्गुणैर्बद्धः सोऽसुरः परिकथ्यते ॥ ५२ ॥

आसुरं भावमापन्नो नष्टबुद्धिः पतेदधः ।
दैवसत्वसमाविष्टः सामीप्यं ब्रह्मणोऽश्नुते ॥ ५३ ॥

अथ नवमोऽध्यायः

ततश्च नवमाध्याये साधनत्रयमुच्यते ।
ब्रह्मविज्ञानिनस्तस्य तथाऽन्यस्य महात्मना ॥ ५४ ॥

तथा हि परमे तस्मिन्ब्रह्मणि स्वात्मयोगतः ।
स्वभावाश्च त्रयः सन्ति ब्रह्मशक्तिविवर्धिताः ॥ ५५ ॥

शास्त्राणां भिन्नरूपत्वं बुध्यते कालदेहतः ।
अजानतां हि शास्त्रार्थं संसारस्य तथाऽऽत्मनः ॥ ५६ ॥

व्यवसाये च महति स्वभावो हेतुरुच्यते ।
तस्मात्स्वभावानुरूपं सर्वं सञ्जायते क्रमात् ॥ ५७ ॥

पुरुषस्य हि या श्रद्धा सा ब्राह्मी शक्तिरुच्यते ।
श्रद्धाजातस्वभावस्तु सर्वकार्यक्षमो भवेत् ॥ ५८ ॥

प्रवृत्तस्यात्मनः श्रद्धा स्वपरा सत्वजा च या ।
सात्त्विकी सा ब्रह्मशक्तिरिति ज्ञेया सनातनी ॥ ५९ ॥

या च स्यात्संसारपरा राजसी सा प्रकीर्त्यते ।
तृतीया सा ब्रह्मशक्तिः विना चात्मधिया हि या ॥ ६० ॥

केवलं स्वप्रधानोत्था तामसीति निगद्यते ।
तुरीया च महाश्रद्धा समाहारपरा मता ॥ ६१ ॥

एकाक्षरपरा विद्या बोध्या चास्ति ततो बुधाः ।
श्रद्धानुरूपं ज्ञानञ्च तपः कर्म च दैहिकम् ॥ ६२ ॥

दैविकञ्च तथा दानमाहारो भक्तिरेव च ।
संभवत्येवमखिलमिति कृष्णमुखोदितम् ॥ ६३ ॥

## अथ दशमोऽध्यायः

ततश्च दशमाध्याये ह्यात्मनो बन्ध उच्यते ।
येनायं द्वंद्वजान्भोगान्भुङ्क्ते बद्धश्च देहिकान् ॥ ६४ ॥

गुणत्रयी महामाया ह्यजा जाता विभाव्यते ।
सैव बध्नाति देहेऽस्मिन्नात्मानमजमव्ययम् ॥ ६५ ॥

सहजा ब्रह्मणो या हि सा देवी परिकथ्यते ।
प्रवृत्तेश्च निवृत्तेश्च व्यवसायस्य साधनम् ॥ ६६ ॥

द्वितीया सा गुणमयी प्रोच्यते शुद्धयोगिभिः ।
कार्योपयोगिनी या तु पुरुषस्याधिकारिणः ॥ ६७ ॥

एतच्छब्दार्थभूता च तृतीया परिकथ्यते ।
सर्वाश्चैताः ब्रह्मणः स्युः शक्तयश्चेति बुध्यते ॥ ६८ ॥

देवी च ब्रह्मदर्शीनां मुमुक्षूणां महात्मनाम् ।
गुणत्रयमयी चान्या सर्वसंसारिणां मता ॥ ६९ ॥

तथाऽन्या ह्यवतीर्णानां ब्रह्मांशानां विशेषतः ।
व्यवसायसाधनं स्यादिति वेद्यं मनीषिभिः ॥ ७० ॥

गुणत्रयमयी या हि सा श्रद्धेति निगद्यते ।
एतासां तरणं यच्च प्राप्तिरित्येव बुध्यते ॥ ७१ ॥

मायैव ज्ञानहेतुः स्यादज्ञानस्य च कर्मणाम् ।
माययैव परं ब्रह्म तथाऽऽत्मा च जगत्तथा ॥ ७२ ॥

व्यवसायपरश्चास्ति ततः सेयं मर्नाषिणा ।
स्वात्मविज्ञानतस्तार्या तीर्णमायो महामतिः ॥ ७३ ॥

सामीप्यं ब्रह्मणस्तस्य सुखेनैति न चान्यथा ।
इति मायागीतया हि बन्धः प्रोक्तो हि चात्मनाम् ॥ ७४ ॥

बद्ध एव स्वकीयं हि व्यवसायं करोति च ।
स्वकीयव्यवसायस्य पूर्तौ सन्यां विमुच्यते ॥ ७५ ॥

## अथैकादशोऽध्यायः

अथ चैकादशेऽध्याये बन्धान्मोक्षस्तु कथ्यते ।
व्यवसायपरस्यास्य पुरुषस्य विपश्चितः ॥ ७६ ॥

अन्ते स्वव्यवसायस्य सर्वसंसारिणां हि सः ।
परप्राप्तेः साधनञ्च सिद्धिरूपश्च कथ्यते ॥ ७७ ॥

योगनिष्ठासुसाध्यश्च तुरीयोऽर्थः स देहिनाम् ।
शुद्धमार्गान्निर्गतो यो योगी नावर्तते पुनः ॥ ७८ ॥

व्यवसायं स्वकीयञ्च कर्तुं संसारमण्डले ।
शुद्धाशुद्धौ च मार्गौ द्वौ वर्तेते शाश्वतौ किल ॥ ७९ ॥

बुध्या धृत्या शुद्धया हि विमुञ्चन्देहमण्डलम् ।
समाप्तव्यवसायश्च ब्रह्मलोकादिसंज्ञकम् ॥ ८० ॥

स्वात्मयोगपरः शान्तो ब्रह्मशक्तिं प्रपद्यते ।
ब्रह्मशक्तिसमाविष्टो ब्रह्मकार्याय सज्जते ॥ ८१ ॥

उत्तमस्य सुखस्येह वेत्ता त्यक्तपरिग्रहः ।
ईश्वरं सर्वभूतानां वसन्तं हृदि चाव्ययम् ॥ ८२ ॥

विज्ञाय योगसंसिद्धः सामीप्यं ब्रह्मणोऽश्नुते ।
सारूप्यं चाथ सायुज्यं सालोक्यञ्चैव ये विदुः ॥ ८३ ॥

तत्तत्वं संग्रहेणैव वक्ष्यामि श्रुतिचोदितम् ।
ब्रह्मस्वभावविज्ञानाद्या च लोकाधिकारिता ॥ ८४ ॥

प्राप्तिस्तस्यास्तु सारूप्यमिति नारायणोदितम् ।
तत्तत्काले तु जगतां स्वस्तये शुद्धभक्तितः ॥ ८५ ॥

ब्रह्मांशं यं प्रपद्यन्ते तत्सायुज्यमितीर्यते ।
ज्ञानदेहेन सर्वत्र सञ्चारो यश्च योगिनाम् ॥ ८६ ॥

सालोक्यं तत्प्रचक्षन्ते शुद्धविद्याधिकारिणः ।
संसारमण्डलं त्यक्त्वा प्राक्तनं शुद्धयोगतः ॥ ८७ ॥

प्राप्तिः परपदस्यैव तत्सामीप्यं प्रकथ्यते ।
सामीप्यं शुद्धयोगेन सालोक्यं शुद्धज्ञानतः ॥ ८८ ॥

शुद्धभक्त्या च सायुज्यं सारूप्यं शुद्धकर्मणा ।
सामीप्यं सर्वतः श्रेष्ठं तेन सर्वं समश्नुते ॥ ८९ ॥

## अथ द्वादशोऽध्यायः

ततश्च द्वादशेऽध्याये वेद्यं यच्च मुमुक्षुभिः ।
ब्रह्मस्वरूपं तच्चात्र सप्रकारमुदाहृतम् ॥ ९० ॥

एकं यच्च परब्रह्म सर्वातीतं हि तद्भवेत् ।
न ध्येयं नैव च ज्ञेयं न च वाच्यं सनातनम् ॥ ९१ ॥

आत्मानात्मशरीरञ्च ब्रह्म तत्परमं भवेत् ।
जगज्जन्मादिकानान्तु कारणञ्चेति बुध्यते ॥ ९२ ॥

प्रोक्ताः सर्वे पदार्थाश्च ब्रह्मण्येव भवन्ति हि ।
परस्माद्ब्रह्मणस्तस्माज्जगत्सर्वं हि जायते ॥ ९३ ॥

परमात्मा परब्रह्म परात्मात्मा सनातनः ।
जीवश्चेति प्रसिद्धाश्च तत्तत्संसारनायकाः ॥ ९४ ॥

तत्तन्नायकदासश्च सामीप्यं ब्रह्मणोऽश्नुते ।
ब्रह्मशक्तिस्फुलिङ्गाश्च सर्वे जीवादयो मताः ॥ ९५ ॥

स्फुलिङ्गो लोक इत्येके देह इत्यपरे बुधाः ।
आत्मैव सर्वलोकेशश्चेति नारदभाषितम् ॥ ९६ ॥

फलं स्यात्तस्य सामीप्यं पञ्चमस्य परेशितुः ।
ब्रह्मसामीप्यमापन्नः शुद्धसङ्कल्पनायकः ॥ ९७ ॥

पूतो मेध्यः पवित्रश्च तत्पश्यति परं पदम् ।
एवं त्रिधा विशुद्धायाः प्रकृतेरवगाहनात् ॥ ९८ ॥

ब्राह्मी विभूतिभिर्युक्तो जगद्रक्षणकर्मणि ।
प्रवर्तते स्वभावेन शुद्धतेजस्स्वरूपवान् ॥ ९९ ॥

अहं तथा जगत्कर्ता पाता संहारकस्तथा ।
शुद्धाधिकारमापन्नः देवो नारायणो विभुः ॥ १०० ॥

आत्मनात्माविवेकाच्च त्याज्योपादेयमोहतः ।
ममैवांशो जीवलोकः जीवभूतः सनातनः ॥ १०१ ॥

प्रकृत्याऽशुद्धयोपेतः विमूढो ब्रह्मणः पथि ।
यश्च स्यात्तदहन्तस्मै विज्ञानं प्रददामि च ॥ १०२ ॥

तस्माज्जातेन यज्ञेन जगत्क्षेमङ्करेण हि ।
लोकः सामीप्यमश्नाति पश्य मे योगमैश्वरम् ॥ १०३ ॥

इति ब्रह्मस्वरूपञ्च साधिकारं विवर्ण्य हि ।
पार्थाय तस्मै प्रददौ दिव्यं ज्ञानविलोचनम् ॥ १०४ ॥

तेन पार्थः परं रूपमपश्यत्कृष्णविग्रहे ।
सञ्जयो धृतराष्ट्राय तच्चाह प्रियदर्शनः ॥ १०५ ॥

ततः पार्थेन भगवान्प्रार्थितो मानुषं वपुः ।
पुनः स्वीकृत्य विभवं स्वकीयं चावदत्तदा ॥ १०६ ॥

द्वादशाध्यायभावो हि चैवं वेद्यो मनीषिभिः ।

## अथ त्रयोदशोऽध्यायः

अनन्तरे तु चाध्याये विभूतिः ब्रह्मणः परा ॥ १०७ ॥

त्रयोदशे विशेषेण ह्युच्यते कृष्णयोगिना ।
पदार्थेषु च सर्वेषु यद्रत्नं ब्रह्मणः परम् ॥ १०८ ॥

रूपन्तदिति विज्ञेयमिति भूतिः प्रदर्शिता ।
व्यवसायपरैर्वेद्या ब्रह्मभूतिः सनातनी ॥ १०९ ॥

## अथ चतुर्दशोऽध्यायः

ततश्चतुर्दशेऽध्याये ब्रह्मणः परमात्मनः ।
विभूतीनाञ्च सर्वासामाप्तये कृष्णयोगिना ॥ ११० ॥

प्राणायामाभिधो योगः प्रोक्तः साङ्गो महर्षयः ।
व्यवसायपरैश्चैव सर्वसंसारिभिस्त्वयम् ॥ १११ ॥

आत्मविज्ञानहेतुश्च ब्रह्मयोगाविवर्धनः ।
सेव्योऽस्त्यवश्यमात्मा हि योगेनानेन पूज्यते ॥ ११२ ॥

प्रवृत्तमञ्जसा नीतमिन्द्रियैर्विषयग्रहैः ।
मानसं शुद्धयोगेन ह्यात्मना सह योजयेत् ॥ ११३ ॥

एवं योगेन चात्मानं चेतसाऽनन्यगामिना ।
पश्यन्भुङ्क्ते ब्रह्मणस्ता विभूतीर्युक्तमानसः ॥ ११४ ॥

इति प्राणायामयोगरहस्यार्थः प्रकाशितः ।
मार्गादस्माच्च्युतो यश्च योगी कालवशानुगः ॥ ११५ ॥

शुद्धयोनिं समापन्नः श्रीमान्भुङ्क्ते परं सुखम् ।
योगश्चैवं सुकथितो ह्यध्यायेऽस्मिन्महात्मना ॥ ११६ ॥

अथ पञ्चदशोऽध्यायः

ततः पञ्चदशेऽध्याये पार्थसूतेन विष्णुना ।
अन्तरात्मात्मभावस्य देवस्य परमात्मनः ॥ ११७ ॥

आत्मभूतिप्रदत्वेन ह्युपास्यस्य मुमुक्षुभिः ।
स्वरूपं सप्रकारं यत्सर्वबीजं तदुच्यते ॥ ११८ ॥

परमात्मा ब्रह्मभावो जगत्कारणमुच्यते ।
क्षराक्षरादतीतश्च स भवेत्पुरुषोत्तमः ॥ ११९ ॥

सर्वतेजस्स्वरूपश्च वासुदेवो जगद्गुरुः ।
परापराभ्यां विद्याभ्यां संस्तुतो दहरेश्वरः ॥ १२० ॥

समभावैर्गुणातीतैः समदुःखसुखैस्सदा ।
उपास्यश्चेति विज्ञेयस्तन्निष्ठानां परायणम् ॥ १२१ ॥

न कर्मणा हि मनसा ज्ञानेन च पुमान्परः ।
आत्मा सेव्यो जगत्साक्षी ह्यविकारो निरञ्जनः ॥ १२२ ॥

केवलं समभावेन योगेनाऽयं विभाव्यते ।
इति पञ्चदशाध्यायभावो वेद्यो मनीषिभिः ॥ १२३ ॥

## अथ षोडशोऽध्यायः

ततश्च षोडशेऽध्याये ह्यविकारस्य वस्तुनः ।
सर्वप्रकृतिमूलस्य ब्रह्मणो रूपमुच्यते ॥ १२४ ॥

अक्षरं ब्रह्मणो रूपं प्रथमं परिबुध्यते ।
जीवरूपं द्वितीयं स्यात्तृतीयं ह्यात्मनामकम् ॥ १२५ ॥

परमात्मस्वरूपं हि तुरीयं कथ्यते बुधैः ।
स्वरूपं पौरुषं यच्च पञ्चमं हि तदुच्यते ॥ १२६ ॥

अक्षरं ब्रह्म यच्चोक्तं षट्प्रकारविभूतिमत् ।
षट्क्रमः कारणं दिव्यमुपास्यं स्वात्मयोगिभिः ॥ १२७ ॥

तदेव सर्वकार्येषु तत्तत्सांसारिकेषु च ।
विज्ञाय स्वात्मयोगेन परमं ज्ञानमश्नुते ॥ १२८ ॥

इति चाक्षरगीतायां कृष्णेन परमात्मना ।
स्वरूपं सप्रकारञ्च प्रोक्तं वै परमात्मनः ॥ १२९ ॥

## अथ सप्तदशोऽध्यायः

ततः सप्तदशेऽध्याये ब्रह्मणः परमात्मनः ।
सर्वस्वभावयुक्तस्य विज्ञानार्थं परात्मना ॥ १३० ॥

राजविद्या योगविद्या शुद्धा सर्वफलप्रदा ।
उच्यते साधिकारश्च विज्ञेयाऽसौ मुमुक्षुभिः ॥ १३१ ॥

## अथाष्टादशोऽध्यायः

ततश्चाष्टादशेऽध्याये कृष्णेन च महात्मना ।
शुद्धं परमहंसस्य श्रेष्ठविद्याधिकारिणः ॥ १३२ ॥

स्वरूपं च यथातत्वं प्रोच्यते तन्मुमुक्षुभिः ।
वेद्यमस्ति यथाभक्ति तद्वक्ष्यामि महर्षयः ॥ १३३ ॥

सर्वरूपं परं ब्रह्म सर्वकारणकारणम् ।
विज्ञाय संयतात्मा हि शुद्धयोगं समश्नुते ॥ १३४ ॥

योगं विचारं ध्यानञ्च कर्म शुद्धञ्च दैहिकम् ।
श्रेष्ठः परमहंसश्च राजविद्यासुशिक्षितः ॥ १३५ ॥

करोति समभावेन ततो याति परां गतिम् ।
सर्वासामेव सिद्धीनामाप्तये सर्वकर्मणाम् ॥ १३६ ॥

सिद्धये च यथायोगं ध्यानमेवावशिष्यते ।
इति परमहंसानान्निष्ठा वेद्या मुमुक्षुभिः ॥ १३७ ॥

राजविद्याविनीतानां शुद्धानां नियतात्मनाम् ।

अथैकोनविंशोऽध्यायः

ततस्त्वैकोनविंशे हि चाध्याये कृष्णयोगिना ॥ १३८ ॥

तेषां परमहंसानां निष्ठा या शुद्धलक्षणा ।
तस्याः संन्यासनिष्ठायाः स्वरूपमभिवर्णितम् ॥ १३९ ॥

संसारव्यवसायस्य श्रेष्ठस्य ह्युत्तरोत्तरम् ।
स्वीकारो योगरूपश्च संन्यास इति कथ्यते ॥ १४० ॥

अर्थानाञ्चैव सर्वेषां व्यक्तानां हि यथायथम् ।
एकस्मिन्शरणे स्थाने योगः संन्यास उच्यते ॥ १४१ ॥

सर्वमावश्यकं विद्यात्सर्वं ब्रह्मस्वभावजम् ।
इति संसारकार्याणि ये कुर्वन्ति मनीषिणः ॥ १४२ ॥

ते स्युः संन्यासिनः श्रेष्ठाः परमात्मपरायणाः ।
द्वंद्वभावफलासक्ताः कायक्लेशपरायणाः ॥ १४३ ॥

चरन्ति द्विविधं कर्म ये ते स्युर्मध्यमा मताः ।
संसारव्यवसायस्य नियतं साधनञ्च यत् ॥ १४४ ॥

कर्मादिकं धुन्वते ये ते वै संन्यासिनोऽधमाः ।
संन्यासिनां हि सर्वेषां ज्ञाननिष्ठैव चोदिता ॥ १४५ ॥

## अथ विंशोऽध्यायः

ततश्च विंशे ह्यध्याये परमात्मपरायणैः ।
संन्यासिभिर्योगिभिश्च वेद्यस्यैवात्मनश्च हि ॥ १४६ ॥

स्वरूपं वर्ण्यते तच्च सर्वमूलं सनातनम् ।
कोटिसूर्यप्रकाशश्च कृष्णेन हि महात्मना ॥ १४७ ॥

अनादिरयमात्मा स्यात्क्षरवर्णो निरीश्वरः ।
भुञ्जानश्च सुखं दुखं सर्वं प्रकृतिजं गुणैः ॥ १४८ ॥

शुद्धः शुक्रो जगत्साक्षी जगत्कर्ता प्रभाकरः ।
समः सर्वेषु भूतेषु पूर्णस्तिष्ठति निर्मलः ॥ १४९ ॥

अजानन्तश्च तं देवं सर्वोपास्यं सनातनम् ।
तापत्रयाभिभूताश्च न पश्यन्ति परं पदम् ॥ १५० ॥

योगिनामपि सर्वेषामन्येषां भावितात्मनाम् ।
काम एव महाशत्रुर्देहस्थःसर्वदेहिनाम् ॥ १५१ ॥

वध्यः स्याज्ज्ञानिभिर्नित्यं प्रेप्सुभिश्च परं पदम् ।
जीवस्य जृंभणं ज्ञानं सर्वकारणमुच्यते ॥ १५२ ॥

तन्मूलकं कर्म सर्वमतो ज्ञानञ्च कर्म च ।
अन्वितं ह्यात्मनोऽधीनमतो ह्यात्मा विचारितः ॥ १५३ ॥

विद्वानेवं स्वमात्मानं ब्रह्मप्रतिनिधिं गुरुम् ।
ब्रह्मणः परमं साम्यमेति सामीप्यधर्मवत् ॥ १५४ ॥

## अथैकविंशोऽध्यायः

अथैकविंशे ह्यध्याये स्तूयते प्रकृतिः परा ।
आत्मनश्च ह्यधिष्ठानं क्षेत्रं तद्वै महात्मना ॥ १५५ ॥

सप्रकारं सपुरुषं साधुलक्षणलक्षितम् ।
इच्छामूलं हि सा चास्ति स्वसंकल्पवपुष्मती ॥ १५६ ॥

व्यवसायाश्च सर्वेऽपि क्षेत्रे ह्यस्मिन्भवन्ति हि ।
ब्रह्मशक्तिस्वरूपा च सा देवी प्रकृतिर्मता ॥ १५७ ॥

विद्वानेवमजां देवीमात्मानञ्चाक्षरं प्रभुम् ।
भूतप्रकृतिनिर्मुक्तः स्वसंकल्पे महीयते ॥ १५८ ॥

## अथ द्वाविंशोऽध्यायः

द्वाविंशे च ततोऽध्याये श्रीकृष्णेन महात्मना ।
प्रकृतौ समवेतानां कर्मणामसतां सताम् ॥ १५९ ॥

स्वरूपं सप्रकारञ्च साधिकारान्निरूपितम् ।
एतन्मुमुक्षुभिर्वेद्यं कर्मसार्थक्यसिद्धये ॥ १६० ॥

## अथ त्रयोविंशोऽध्यायः

त्रयोविंशे ततोऽध्याये ज्ञानकर्मसमाश्रया ।
आत्मानात्मपरा भक्तिः मध्यमानां सुखावहा ॥ १६१ ॥

जिज्ञासूनां परं ब्रह्म तीर्थानां भावितात्मनाम् ।
व्याख्यास्यते भगवता वासुदेवेन धीमता ॥ १६२ ॥

अथ चतुर्विंशोऽध्यायः

चतुर्विंशे ततोऽध्याये सर्वेषां कारणं परम् ।
ज्ञानं सर्वसमाहारपरं विज्ञानिनां हितम् ॥ १६३ ॥

ईशानः सर्वविद्यानां देवश्चात्मा सनातनः ।
विद्याधिकारिणश्चैव सर्वे चैते महात्मना ॥ १६४ ॥

तद्विद्यामहिमा चैव सप्रकारं निरूपिताः ।
एतद्वेद्यं विशेषेण योगिनामयनं परम् ॥ १६५ ॥

अथ पञ्चविंशोऽध्यायः

पञ्चविंशे ततोऽध्याये योगदेवीपतिःप्रभुः ।
बदरीशो नरसखः लोकप्रतिनिधिन्नरम् ॥ १६६ ॥

लोकभावनयाऽभावनिष्ठामास्थाय यत्नतः ।
नटन्तं शोचमानञ्च पापभीत्या स्वसन्निधौ ॥ १६७ ॥

लोकशिक्षास्वरूपञ्च कालदेशजनोचितम् ।
जिज्ञासुं शुद्धधर्मञ्च स्वात्मानं शरणं गतम् ॥ १६८ ॥

पार्थं स्वांशं समामन्त्र्य योगी च भगवान्परः ।
नारायणः कृष्णरूपः त्रयोविंशतिभिः स्वयम् ॥ १६९ ॥

गीताभिः सर्वधर्मांश्च संसारव्यवसायदान् ।
जगाद तत्वयोगेन श्रुतिमूलान्सनातनान् ॥ १७० ॥

अस्मिन्तेषां समाहारो योगात्मा हि निगद्यते ।
श्लोकैर्नियतसंख्यैश्च क्रमादेव स चोच्यते ॥ १७१ ॥

प्राप्यानाञ्च पुमर्थानां मोक्षस्तु परमः स्मृतः ।
कोऽसौ मोक्ष इति प्रश्ने भ्रमन्ति भुवि वै जनाः ॥ १७२ ॥

भुक्तभोगस्य यस्त्यागो व्यवसायस्य चात्मनः ।
संसारस्य च संन्यासः मोक्ष इत्युच्यते बुधैः ॥ १७३ ॥

बीजं गृहीत्वैव पुनः परं यान्ति मुमुक्षवः ।
बीजे तस्मिन्श्च शुद्धानि ह्यष्टतत्वानि भान्ति च ॥ १७४ ॥

परं प्राप्तस्य पुंसश्च व्यवसायपरस्य हि ।
शुद्धबीजेनैव पुनः व्यवसायः परो भवेत् ॥ १७५ ॥

तस्मात्संसारिभिर्नित्यं बीजशुद्धिर्यथामति ।
कर्तव्येति हि शास्त्रार्थः सा द्विधा भाति शास्त्रतः ॥ १७६ ॥

संन्यासः प्रथमा शुद्धिः द्वितीया त्याग उच्यते ।
व्यवसायान्तरे बीजदोषनाशाय वै पुनः ॥ १७७ ॥

तदेतौ विहितौ तौ च योगादेव हि नान्यथा ।
समाहाराभिधो योगस्ततोऽत्र हि निगद्यते ॥ १७८ ॥

श्रीमान्नारायणो देवः कालरूपः सनातनः ।
गुणाविष्टस्य लोकस्य भिन्नस्य च परस्परम् ॥ १७९ ॥

वीक्ष्य स्वभावमैक्यञ्च ह्यनुशास्ति जगत्त्रयम् ।
सुखदुःखसमत्वञ्च देवो नारायणो विभुः ॥ १८० ॥

स्वावतारेण लोकांश्च शिक्षयत्यत्र योगजम् ।
अमृतत्वकारणञ्च भेदबुद्धिप्रणाशजम् ॥ १८१ ॥

ततो नारायणो देवः शुद्धसङ्कल्पनायकः ।
स्वनियुक्तैर्महाभागैः शुद्धैर्लोकाधिकारिभिः ॥ १८२ ॥

बुद्धिमेकामवष्टभ्य व्यवसायपरस्य च ।
लोकस्य धर्मनिष्ठाञ्च ह्यवतारयति स्वयम् ॥ १८३ ॥

ततः स भगवान्देवो लोकान्योगपरां पुनः ।
आत्मावगाहिनीं धर्मनिष्ठां कर्मस्वाशिक्षयत् ॥ १८४ ॥

अथ नारायणो देवः दिव्यकारणगीतया ।
उक्तमर्थं विशेषेण चैवमेवाह योगतः ॥ १८५ ॥

करणङ्कारणं कर्तृ ह्युपायं प्राप्यमेव च ।
ब्रह्मैवास्ति ततः सर्वं कारणं ब्रह्म कथ्यते ॥ १८६ ॥

कैवल्यार्थं ततश्चैवमाह नारायणो विभुः ।
कारणस्यैव विज्ञानाद्वस्तुनः परमात्मनः ॥ १८७ ॥

आत्मानात्मभ्रमान्मुक्तो परप्रेप्सुः प्रतिष्ठते ।
इति श्लोकैश्च षड्भिस्तु ज्ञाननिष्ठा प्रसादिता ॥ १८८ ॥

स्वरूपगीतया योऽर्थः व्याख्यातश्च महात्मना ।
श्लोकेऽस्मिन्सप्तमे सोऽयमुक्तोऽन्तर्मुखलक्षणः ॥ १८९ ॥

श्लोकेऽस्मिन्नष्टमे ह्युक्तः साधनत्रयगीतया ।
योऽर्थः कृष्णेन योगार्थः सोऽयश्चान्तर्मुखोदयः ॥ १९० ॥

व्याख्यातोऽस्ति यथातत्वं स च वेद्यो मुमुक्षुभिः ।
विज्ञानादस्य शान्तिं वै योगिनो यान्त्यनुत्तमाम् ॥ १९१ ॥

ततश्च मायामोक्षाभ्यां गीताभ्यां योऽर्थ उच्यते ।
तत्संग्रहश्च नवमे श्लोके ह्युक्तो महात्मना ॥ १९२ ॥

गुणत्रयात्समुत्पन्नं कल्मषं यच्च तापदम् ।
तन्मायेति च विख्यातं त्रिविधा सा च कथ्यते ॥ १९३ ॥

यश्च मुक्तः प्रशान्तात्मा स भुङ्क्ते शाश्वतं सुखम् ।
सौमनस्यं गुणान्मोक्षो मोक्ष इत्यवधार्यताम् ॥ १९४ ॥

ततश्च दशमे श्लोके ब्रह्मगीतार्थ उच्यते ।
तत्र प्राधान्यतः साधु ह्यधिकार्येव वर्णितः ॥ १९५ ॥

ततश्चैकादशे श्लोके भगवान्भूतभावनः ।
अनुत्तमं यद्भूतेषु ग्राह्यं तदिति निर्णयः ॥ १९६ ॥

तद्विज्ञान्यपि सुश्लाघ्यः तत्प्रेप्सुश्च ततोऽधिकः ।
स च दिव्यां ब्रह्मभूतिं माशब्दार्थां महेश्वरीम् ॥ १९७ ॥

सरस्वतीं महालक्ष्मीं दुर्गां काळिञ्च दक्षिणाम् ।
श्रीविद्यां योगविद्याञ्च समाराध्य पुनः पुनः ॥ १९८ ॥

योगी सर्वेषु कालेषु व्यवसायेषु च स्वतः ।
सर्वदेहेषु शान्तात्मा समबुद्धिर्विशिष्यते ॥ १९९ ॥

इति दिव्यार्थदां ब्राह्मीं जगाद परमो गुरुः ।
विद्या चेयं योगिसेव्या चेति शुद्धैरुदीर्यते ॥ २०० ॥

इति द्वितीयषट्केण देवी सङ्कल्पाविविता ।
संस्तुताऽस्ति यथायोगं योगिभ्यः कृष्णमूर्तिना ॥ २०१ ॥

ततः श्लोकद्वयेनैव कृष्णो नारायणो विभुः ।
तं प्राणायामगीतार्थं व्याजहार स्वयोगतः ॥ २०२ ॥

ततश्चतुर्दशे श्लोके कृष्णदेवो महर्षयः ।
परमात्मस्वरूपञ्च व्याजहार सलक्षणम् ॥ २०३ ॥

ततः पञ्चदशे श्लोके ब्रह्म यच्चाक्षरं स्तुतम् ।
समाहारस्वरूपञ्च तच्च साधु निगद्यते ॥ २०४ ॥

ततश्च षोडशे श्लोके राजविद्या महात्मना ।
समन्त्रबीजध्याना च व्याख्याता तत्त्वयोगतः ॥ २०५ ॥

ततः सप्तदशे श्लोके ज्ञानदात्रा महात्मना ।
सत्वविज्ञानरूपा च हंसनिष्ठा सुशिक्षिता ॥ २०६ ॥

ततश्चाष्टादशे श्लोके देवो नारायणो यतिः ।
आह संन्यासनिष्ठाञ्च ह्यपरान्तत्वमुद्रया ॥ २०७ ॥

एवं तृतीयषट्केण श्लोकेन हि महात्मना ।
कर्मनिष्ठा च कथिता सर्वेषां भावितात्मनाम् ॥ २०८ ॥

ततश्चैकोनविंशे च ह्यध्याये यदुनन्दनः ।
योगेनात्मोपासनाञ्च साधिकारं जगाद हि ॥ २०९ ॥

ततः श्लोके च विंशे हि त्रैविध्यं जगतस्तथा ।
विद्यानां कर्मणाञ्चापि ह्यजाजानां निरूपितम् ॥ २१० ॥

एकविंशे ततः श्लोके योगिनां कर्मिणां पुनः ।
कर्मनिष्ठा निगदिता समनिष्ठा महात्मना ॥ २११ ॥

द्वाविंशे च ततः श्लोके ध्येयः स भगवानजः ।
भक्तिसाध्यं परं ब्रह्मभक्तिं ताञ्चाह योगिराट् ॥ २१२ ॥

त्रयोविंशे ततः श्लोके चात्मनिष्ठस्य वै पुनः ।
प्रशस्ता ज्ञाननिष्ठा च साङ्गं साधु निरूपिता ॥ २१३ ॥

चतुर्विंशे ततः श्लोके योगिनां परमो गुरुः ।
योगगीतारहस्यार्थं चैवं पार्थाय चावदत ॥ २१४ ॥

अनुद्भूतवस्तुभेदः समाहार इति श्रुतः ।
समाहारे हि चैकत्वं शब्दसिद्धं महात्मनाम् ।। २१५ ।।

यथा सांसारिको भेदः सहजस्सर्ववस्तुनः ।
तथाऽभेदश्च सहजः सर्वदेमौ सनातनौ ।। २१६ ।।

तस्माद्धि भेदाऽभेदौ च ब्रह्मणो हि स्वभावजौ ।
त्रैगुण्यविषया वेदाः भेदे जाग्रति देहिनाम् ।। २१७ ।।

ज्ञानं मनस्तथा कर्म चैतानि गुणजानि हि ।
विना ब्रह्म नेतिनेतिश्रुतिसिद्धं परात्परम् ।। २१८ ।।

परमात्मात्मजीवानामक्षरस्य च सन्ति हि ।
तस्मादेते गुणपरा व्यवसायेषु जाग्रति ।। २१९ ।।

तस्माद्वयञ्च सर्वेऽपि तेषां भूतिन्तु चाग्रतः ।
ज्ञानं मनोकर्मभिश्च सद्भिः संप्राप्य यत्नतः ।। २२० ।।

एकं मूलं च यत्स्थानं शुद्धं तच्च व्रजेमहि ।
तद्बुद्धयस्तन्मनस्काः तत्कर्मनिरता बुधाः ।। २२१ ।।

स्थिरमूलाः विशालाक्षाः लोकक्षेमकराः शुभाः ।
सर्वमावश्यकं मत्वा कर्म कुर्मो यथासुखम् ।। २२२ ।।

सङ्कल्पं च तथा विज्ञाः भवेमहि वयं श्रिया ।
एवं स्थितानां दासानां स्वव्यवसायवेधकः ।। २२३ ।।

यः शत्रुः सर्वदेहस्थःतमात्मा बलवाञ्शुचिः ।
विनाशयति योगेन शुद्धेनैकेन वर्चसा ॥ २२४ ॥

इति चतुर्विंशतिभिर्गीताभिर्भगवानजः ।
उक्त्वा ततो व्याजहार कर्तव्यं तत्फलं च सः ॥ २२५ ॥

ततः पार्थश्चैवमुक्तः कृष्णेन ससमञ्जसम् ।
अस्तौषीत्तं महात्मानं मित्रञ्च परमं गुरुम् ॥ २२६ ॥

परमात्मभूतिमन्तं वासुदेवं महेश्वरम् ।
योगदेवीपतिं शान्तं शङ्करं शिवमच्युतम् ॥ २२७ ॥

ततो यया च भगवान्ब्रह्मस्तुत्या स्तुतस्तदा ।
ताञ्च राज्ञे संजयश्च प्राह युक्तेन चेतसा ॥ २२८ ॥

ब्रह्मस्तुतौ च तस्यां हि पावनायां हि देहिनाम् ।
चतुर्विंशतिगीतानां संग्रहार्थः प्रदर्शितः ॥ २२९ ॥

एवं गीतासंग्रहार्थः नारायणमुखाच्छ्रुतः ।
एतद्विज्ञानिनस्सर्वे भुञ्जते सुखमुत्तमम् ॥ २३० ॥

गीताशास्त्रमिदं पुण्यं गायत्रीपादसंभवम् ।
लोकप्रतिनिधिस्थाने स्थितायार्ताय धीमते ॥ २३१ ॥

नारायणेन कृष्णेन चार्जुनाय प्रसादितम् ।
शुद्धशास्त्रमिदं पुण्यं ज्ञात्वा हि श्रियमश्नुते ॥ २३२ ॥

इति श्रीमहर्षिगोभिलविरचितः
गीतार्थसंग्रहः
संपूर्णः





ओं नमः श्रीपरमर्षिभ्यो योगिभ्यः

शुद्धधर्ममण्डलार्यसुपरिष्कृता

# श्रीमद्भगवद्गीता

तत्र

गीतावतारनिरूपणं नाम

## प्रथमोऽध्यायः ।

---

धृतराष्ट्र उवाच

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥

संजय उवाच

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ ४ ॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एवहि ॥ ५ ॥

अथोच्चैः संप्रहृष्टात्मा युक्तः शान्तनवोऽब्रवीत् ।
प्रीतिमान्हि दृढं कृष्णः पाण्डवेषु यशस्विषु ॥ ६ ॥

तस्माद्बिभेमि राजेन्द्र शमो भवतु पाण्डवैः ।
पृथिवीं भुंक्ष्व सहितो भ्रातृभिर्बलिभिर्वशी ॥ ७ ॥

नरनारायणौ देवाववज्ञाय नशिष्यसि ।
इत्येवं कथयन्राजन् भीष्मः शान्तनवो महान् ॥ ८ ॥

तस्य सञ्जनयन्हर्षं कुरुवृद्धः पितामहः ।
सिम्हनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ ९ ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १० ॥

धार्तराष्ट्रबलं दृष्ट्वा युद्धाय समुपस्थितम् ।
अर्जुनस्य हितार्थाय कृष्णो वचनमब्रवीत् ॥ ११ ॥

*श्रीभगवानुवाच*

शुचिर्भूत्वा महाबाहो संग्रामाभिमुखे स्थितः ।
पराजयाय शत्रूणां दुर्गास्तोत्रमुदीरय ॥ १२ ॥

*संजय उवाच*

एवमुक्तोऽर्जुनः संख्ये वासुदेवेन धीमता ।
अवतीर्य रथात्पार्थः स्तोत्रमाह कृताञ्जलिः ॥ १३ ॥

अर्जुन उवाच

नमस्ते सिद्धसेनानि आर्ये मन्दरवासिनि ।
कुमारि कालि कापालि कपिले कृष्णपिङ्गले ॥ १४ ॥

भद्रकालि नमस्तुभ्यं महाकालि नमोऽस्तु ते ।
चण्डि चण्डे नमस्तुभ्यं तारिणि वरवर्णिनि ॥ १५ ॥

कात्यायनि महाभागे करालि विजये जये ।
शिखिपिञ्छध्वजधरे नानाभरणभूषिते ॥ १६ ॥

अट्टशूलप्रहरणे खड्गखेटकधारिणि ।
गोपेन्द्रस्यानुजे ज्येष्ठे नन्दगोपकुलोद्भवे ॥ १७ ॥

महिषासृक्प्रिये नित्यं कौशिकि पीतवासिनि ।
अट्टहासे कोकमुखे नमस्तेऽस्तु रणप्रिये ॥ १८ ॥

उमे शाकंवरि श्वेते कृष्णे कैटभनाशिनि ।
हिरण्याक्षि विरूपाक्षि सुधूम्राक्षि नमोऽस्तु ते ॥ १९ ॥

वेदश्रुतिमहापुण्ये ब्रह्मण्ये जातवेदसि ।
जंबूकटकचैत्येषु नित्यं सन्निहितालये ॥ २० ॥

त्वं ब्रह्मविद्या विद्यानां महानिद्रा च देहिनाम् ।
स्कन्दमातर्भगवति दुर्गे कान्तारवासिनि ॥ २१ ॥

स्वाहाकारः स्वधा चैव कला काष्ठा सरस्वती ।
सावित्री वेदमाता च तथा वेदान्त उच्यते ॥ २२ ॥

कान्तारभयदुर्गेषु भक्तानाञ्चालयेषु च ।
नित्यं वससि पाताले युद्धे जयसि दानवान् ॥ २३ ॥

त्वं जंभनी मोहिनी च माया ह्रीः श्रीस्तथैव च ।
सन्ध्या प्रभावती चैव सावित्री जननी तथा ॥ २४ ॥

तुष्टिः पुष्टिर्धृतिर्दीप्तिश्चन्द्रादित्यविवर्धिनी ।
भूतिर्भूतिमतां संख्ये वीक्ष्यसे सिद्धचारणैः ॥ २५ ॥

स्तुताऽसि त्वं महादेवि विशुद्धेनान्तरात्मना ।
जयो भवतु मे नित्यं त्वत्प्रसादाद्रणाजिरे ॥ २६ ॥

*संजय उवाच*

ततः पार्थस्य विज्ञाय भक्ति मानववत्सला ।
अन्तरिक्षगतोवाच गोविन्दस्याग्रतस्थिता ॥ २७ ॥

स्वल्पेनैव तु कालेन शत्रून्जेष्यसि पाण्डव ।
नरस्त्वमसि दुर्धर्ष नारायणसहायवान् ॥ २८ ॥

अजेयस्त्वं रणेऽरीणामपि वज्रभृतःस्वयम् ।
इत्येवमुक्त्वा वरदा क्षणेनान्तरधीयत ॥ २९ ॥

मोहादेतौ न जानन्ति नरनारायणावृषी ।
तव पुत्रा दुरात्मनः सर्वे मन्युवशानुगाः ॥ ३० ॥

यत्र धर्मो द्युतिः कान्तिर्यत्र ह्रीः श्रीस्तथा मतिः ।
यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥ ३१ ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ ३२ ॥

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ ३३ ॥

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ ३४ ॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ ३५ ॥

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥ ३६ ॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ ३७ ॥

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥ ३८ ॥

हृषीकेशं तदा वाक्यमिदमाह महीपते ।

*अर्जुन उवाच*

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ ३९ ॥

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ ४० ॥

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ ४१ ॥

*संजय उवाच*

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ ४२ ॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ ४३ ॥

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ ४४ ॥

श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥ ४५ ॥

कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।

*अर्जुन उवाच*

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ ४६ ॥

सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ ४७ ॥

गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ४८ ॥

निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ४९ ॥

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ५० ॥

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वाऽर्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥ ५१ ॥

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामः
तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ५२ ॥

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसम्मूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ५३ ॥

*संजय उवाच*

एवमुक्त्वाऽर्जुनः सङ्ख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ५४ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायां
*गीतावतारनिरूपणं* नाम प्रथमोऽध्यायः ॥

---

अथ

नरनारायणधर्मगीता नाम

## द्वितीयोऽध्यायः ।

---

*संजय उवाच*

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १ ॥

*श्रीभगवानुवाच*

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ २ ॥

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ ३ ॥

क्लैब्यं मास्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ४ ॥

चतुर्धोऽहं विभक्तात्मा चरामि जगतो हितः ।
लोकानां धारणार्थाय विधानं विदधामि च ॥ ५ ॥

यत्स्वभावात्मतत्त्वज्ञैः कारणैरुपलक्ष्यते ।
अनादिमध्यनिधनः सोऽन्तरात्माऽस्मि शाश्वतः ॥ ६ ॥

यत्तु मे परमं गुह्यं रूपं सूक्ष्मार्थदर्शिभिः ।
गृह्यते सूक्ष्मभावज्ञैः सोऽविभाव्योऽस्मि शाश्वतः ॥ ७ ॥

तत्तु मे परमं गुह्यं येन व्याप्तमिदं जगत् ।
मनोबुद्धिगतः श्रेयो विदधामि नरर्षभ ॥ ८ ॥

मांतु ज्ञातुं कृता बुद्धिर्भवता मानवोत्तम ।
श्रृणु योऽहं यतश्चाहं यदर्थश्चाहमुद्यतः ॥ ९ ॥

एका मूर्तिर्निर्गुणाख्या योगं परममास्थिता ।
द्वितीया सृजते तात भूतग्रामं चराचरम् ॥ १० ॥

सृष्टं संहरतेऽन्या हि जगत्स्थावरजङ्गमम् ।
क्षपयन्ती मोहयति आत्मनिष्ठा स्वमायया ॥ ११ ॥

चतुर्थी मे महामूर्तिर्जगद्वृद्धिं ददाति सा ।
रक्षते चापि नियता सोऽहमस्मि नभश्चरः ॥ १२ ॥

मया सर्वमिदं व्याप्तं मयि सर्वं प्रतिष्ठितम् ।
अहं सर्वजगद्बीजं सर्वत्र गतिरव्ययः ॥ १३ ॥

ये केचिन्नियतात्मानस्त्रेताग्निपरमार्चिताः ।
अग्निकार्यपरा नित्यं जपहोमपरायणाः ॥ १४ ॥

आत्मन्यग्नीन्समाधाय नियता नियतेन्द्रियाः ।
अनन्यमनसस्ते मां सर्वे वै समुपासते ॥ १५ ॥

तेषामहं तपो दीप्तं तेजः सम्यक्समाहितम् ।
नित्यं ते मयि वर्तन्ते तेषु चाहमतन्द्रितः ॥ १६ ॥

सर्वतो मुक्तसङ्गेन मय्यनन्यसमाधिना ।
शक्यः समासादयितुमहं वै ज्ञानचक्षुषा ॥ १७ ॥

मां स्थूलदर्शनं विद्धि जगतः कार्यकारणम् ।
मत्तश्च संप्रसूतान्वै विद्धि लोकान्सदेवतान् ॥ १८ ॥

मया चापि चतुर्धाऽऽत्मा विभक्तः प्राणिषु स्थितः ।
आत्मभूतो वासुदेवो ह्यनिरुद्धो मतौ स्थितः ॥ १९ ॥

संकर्षणोऽहंकारे च प्रद्युम्नो मनसि स्थितः ।
अन्यथा च चतुर्धा यत्सम्यक्त्वं श्रोतुमर्हसि ॥ २० ॥

यत्तत्पद्ममभूत्पूर्वं तत्र ब्रह्मा व्यजायत ।
ब्रह्मणश्चापि संभूतः शिव इत्यवधार्यताम् ॥ २१ ॥

शिवात्स्कन्दः संबभूव एतत्सृष्टिचतुष्टयम् ।
दैत्यदानवरक्षोभिर्यदा धर्मः प्रपीड्यते ॥ २२ ॥

तदाऽहं धर्मवृद्ध्यर्थं मूर्तिमान्भविताऽनघ ।
योगिनो योगयुक्ताश्च ते मां पश्यन्ति नान्यथा ॥ २३ ॥

शुद्धाभिजनसंपन्नाः श्रद्धायुक्तेन चेतसा ।
मद्भक्त्या च द्विजश्रेष्ठा गच्छन्ति परमां गतिम् ॥ २४ ॥

तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्माऽऽत्मविच्छुचिः ।
आसादयति तद्ब्रह्म यत्र गत्वा न शोचति ॥ २५ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायां
*नरनारायणधर्मगीता* नाम द्वितीयोऽध्यायः ॥

---

अथ

अवतारगीता नाम

## तृतीयोऽध्यायः ।

---

### *अर्जुन उवाच*

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १ ॥

### *श्रीभगवानुवाच*

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ २ ॥

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ३ ॥

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ ४ ॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ ५ ॥

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ ६ ॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ ७ ॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ ८ ॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ ९ ॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ १० ॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिता. ॥ ११ ॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ।। १२ ।।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ।। १३ ।।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।। १४ ।।

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ।। १५ ।।

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ।। १६ ।।

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ।। १७ ।।

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ।। १८ ।।

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ।। १९ ।।

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ।। २० ।।

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।। २१ ।।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।। २२ ।।

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ।। २३ ।।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।। २४ ।।

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ।। २५ ।।

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायां
*अवतारगीता* नाम तृतीयोऽध्यायः ।

---

अथ

अधिकारगीता नाम

## चतुर्थोऽध्यायः ।

---

*अर्जुन उवाच*

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ।। १ ।।

एतं मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता नह्युपपद्यते ॥ २ ॥

*श्रीभगवानुवाच*

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ३ ॥

बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ ७ ॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ ८ ॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ ९ ॥

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १० ॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ ११ ॥

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ १२ ॥

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १३ ॥

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ १४ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ १५ ॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ १६ ॥

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ १७ ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ १८ ॥

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १९ ॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ २० ॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ २१ ॥

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २२ ॥

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ २३ ॥

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २४ ॥

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ २५ ॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥ २६ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायां
*अधिकारगीता* नाम चतुर्थोऽध्यायः ॥

---

अथ

शिक्षागीता नाम

# पञ्चमोऽध्यायः ।

---

*अर्जुन उवाच*

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥ १ ॥

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ २ ॥

*श्रीभगवानुवाच*

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ ३ ॥

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ४ ॥

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥ ५ ॥

क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६ ॥

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ७ ॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ८ ॥

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ९ ॥

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ १० ॥

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ११ ॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १२ ॥

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ १३ ॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्त्तमानोऽपि स योगी मयि वर्तते ॥ १४ ॥

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ १५ ॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ १६ ॥

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ १७ ॥

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ १८ ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ १९ ॥

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ २० ॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ २१ ॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ २२ ॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ २३ ॥

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २४ ॥

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ २५ ॥

एवं बुद्धेः परं बुध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ २६ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*शिक्षागीता* नाम पञ्चमोऽध्यायः ।

---

अथ
कारणगीता नाम

## षष्ठोऽध्यायः ।

---

*अर्जुन उवाच*

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ १ ॥

*श्रीभगवानुवाच*

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ २ ॥

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ ३ ॥

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ ४ ॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ ५ ॥

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते ॥ ६ ॥

यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमांल्लोकान्न हन्ति न निबध्यते ॥ ७ ॥

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥ ८ ॥

साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ९ ॥

यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥ १० ॥

पिताऽहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च ॥ ११ ॥

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ १२ ॥

न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ १३ ॥

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १४ ॥

यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ १५ ॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १६ ॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम् ॥ १७ ॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १८ ॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ १९ ॥

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ २० ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ २१ ॥

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २२ ॥

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ॥ २३ ॥

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २४ ॥

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ २५ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*कारणगीता* नाम षष्ठोऽध्यायः ॥

---

अथ

कैवल्यगीता नाम

## सप्तमोऽध्यायः ॥

---

*अर्जुन उवाच*

किं शीलः किं समाचारः किं विद्यः किं पराक्रमः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेः परम् ॥ १ ॥

*श्रीभगवानुवाच*

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ २ ॥

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ३ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ ४ ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ ५ ॥

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ ६ ॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ ७ ॥

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ८ ॥

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ९ ॥

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १० ॥

अधश्चोर्ध्वं प्रसृतास्तस्य शाखाः
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ ११ ॥

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च सम्प्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्त्वा १२ ॥

ततः पदं तत्परिमार्गितव्यम्
यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ १३ ॥

निर्मानमोहा जितसङ्गदोषाः
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढा पदमव्ययं तत् ॥ १४ ॥

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ १५ ॥

किं पुनर्ब्राह्मणा पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ १६ ॥

त्रैविद्या मां सोमपाः पूतपापाः
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥ १७ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ १८ ॥

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ १९ ॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ २० ॥

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ २१ ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ २२ ॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ २३ ॥

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बद्ध्यते ॥ २४ ॥

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २५ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*कैवल्यगीता* नाम सप्तमोऽध्यायः

---

अथ
स्वरूपगीता नाम
## अष्टमोऽध्यायः ।

---

*अर्जुन उवाच*

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ १ ॥

*श्रीभगवानुवाच*

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ २ ॥

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ ३ ॥

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥ ४ ॥

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ ५ ॥

दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचःसम्पदं दैवीमभिजातोऽसि पाण्डव ॥ ६ ॥

द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे श्रुणु ॥ ७ ॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ८ ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥ ९ ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ १० ॥

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रतः ॥ ११ ॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ १२ ॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १३ ॥

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १४ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १५ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १६ ॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १७ ॥

आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १८ ॥

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १९ ॥

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ २० ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २१ ॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २२ ॥

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २३ ॥

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २४ ॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २५ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायां
*स्वरूपगीता* नाम अष्टमोऽध्यायः ॥

---

अथ

साधनत्रयगीता नाम

## नवमोऽध्यायः ।

---

### *अर्जुन उवाच*

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

### श्रीभगवानुवाच

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः॥ ८ ॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २३ ॥

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २४ ॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २५ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*साधनत्रयगीता* नाम नवमोऽध्यायः ॥

---

अथ

मायागीता नाम

# दशमोऽध्यायः ॥

---

*श्रीभगवानुवाच*

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १ ॥

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ २ ॥

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ३ ॥

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ४ ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ५ ॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ६ ॥

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ७ ॥

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ ८ ॥

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यन्ते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥ ९ ॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ १० ॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ ११ ॥

यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ १२ ॥

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ १३ ॥

यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ १४ ॥

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ १५ ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ १६ ॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ १७ ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ १८ ॥

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ १९ ॥

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ २० ॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ २१ ॥

प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ २२ ॥

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ २३ ॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २४ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*मायागीता* नाम दशमोऽध्यायः ॥

अथ

मोक्षगीता नाम

# एकादशोऽध्यायः ॥

---

*श्रीभगवानुवाच*

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ १ ॥

बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ २ ॥

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ३ ॥

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ४ ॥

गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ ५ ॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ ६ ॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ७ ॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ८ ॥

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ९ ॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृति सा पार्थ सात्त्विकी ॥ १० ॥

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ११ ॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ;
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ १२ ॥

सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ १३ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १४ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १५ ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १६ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ।। १७ ।।

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ।। १८ ।।

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ।। १९ ।।

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ।। २० ।।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ।। २१ ।।

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ।। २२ ।।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ।। २३ ।।

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ।। २४ ।।

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायां *मोक्षगीता*
नाम एकादशोऽध्यायः ।। ७ ।।

अथ

ब्रह्मस्वरूपगीता नाम

# द्वादशोऽध्यायः ।

---

*अर्जुन उवाच*

एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ १ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ २ ॥

*श्रीभगवानुवाच*

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ ३ ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ ८ ॥

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ ९ ॥

बलं बलवतामस्मि कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ १० ॥

रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ११ ॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ १२ ॥

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ १३ ॥

पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ १४ ॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ १५ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ १६ ॥

संजय उवाच

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ १७ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १८ ॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ १९ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ २० ॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ २१ ॥

ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ २२ ॥

अर्जुन उवाच

पश्यामि देवांस्तव देव देहे
सर्वान्स्तथा भूतविशेषसङ्घान् ।

ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ २३ ॥

अनेकबाहूदरवक्त्रनेत्रम्
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिम्
पश्यामि विश्वेश्वर विश्वरूपं ॥ २४ ॥

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्
दीप्तानलार्कद्युतिमप्रमेयम् ॥ २५ ॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपम्
प्रसीद देवेश जगन्निवास ॥ २६ ॥

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीराः
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २७ ॥

किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ २८ ॥

*श्रीभगवानुवाच*

मया प्रसन्नेन तवार्जुनेदम्
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यम्
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ २९ ॥

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथाऽन्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठाः
युध्यस्व जेतासि रणे सपत्नान् ॥ ३० ॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३१ ॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।

*श्रीभगवानुवाच*

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ ३ ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ४ ॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ ५ ॥

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ ६ ॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ ७ ॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ ८ ॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ ९ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ १० ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ ११ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ १२ ॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ १३ ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ;
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ १४ ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ १५ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ १६ ॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ १७ ॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १८ ॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ १९ ॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ २० ॥

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २१ ॥

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २२ ॥

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २३ ॥

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २४ ॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ २५ ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ २६ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायां
*ब्रह्मविभूतिगीता* नाम त्रयोदशोऽध्यायः

---

अथ

प्राणायामगीता नाम

# चतुर्दशोऽध्यायः

---

*अर्जुन उवाच*

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।
तस्याऽहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ १ ॥

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ २ ॥

*श्रीभगवानुवाच*

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३ ॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ४ ॥

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ ५ ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥ ६ ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ ७ ॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ ८ ॥

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ ९ ॥

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १० ॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ ११ ॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १२ ॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १३ ॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ १४ ॥

सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवाऽयं स्थितश्चलति तत्त्वतः ॥ १५ ॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ १६ ॥

तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ १७ ॥

युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ १८ ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ १९ ॥

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ २० ॥

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ २१ ॥

अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ २२ ॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ २३ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ २४ ॥

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ २५ ॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ २६ ॥

इति भगवद्गीतायां योगब्रह्मविद्यायां
*प्राणायामगीता* नाम चतुर्दशोऽध्यायः ॥

---

अथ

परमात्मगीता नाम

## पञ्चदशोऽध्यायः ।

---

*श्रीभगवानुवाच*

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ ५ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ ६ ॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ ७ ॥

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ ८ ॥

उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ ९ ॥

अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ १० ॥

मयाऽध्यक्षेण प्रकृतिः सूयते स चराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ ११ ॥

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ १२ ॥

यान्ति देवव्रता देवान् पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ १३ ॥

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ १४ ॥

सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १६ ॥

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १७ ॥

वेदाऽविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ १८ ॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ १९ ॥

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २० ॥

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ २१ ॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ २२ ॥

मयि सर्वाणि कर्माणि संन्यस्याऽध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ २३ ॥

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ २४ ॥

इति भगवद्गीतायां योगब्रह्मविद्यायाम्
*परमात्मगीता* नाम पञ्चदशोऽध्यायः ॥

---

अथ

अक्षरगीता नाम

## षोडशोऽध्यायः ।

---

*अर्जुन उवाच*

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥

अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

*श्रीभगवानुवाच*

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ ७ ॥

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ८ ॥

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।

भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ ९ ॥

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥ १० ॥

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ ११ ॥

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १२ ॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १३ ॥

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ १४ ॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ १५ ॥

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ १६ ॥

इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १७ ॥

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १८ ॥

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १९ ॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माऽक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ २० ॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ २१ ॥

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ २२ ॥

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ २३ ॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २४ ॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ २५ ॥

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २६ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*अक्षरगीता* नाम षोडशोऽध्यायः ॥

---

अथ
राजविद्यागीता नाम
## सप्तदशोऽध्यायः ।

---

*श्रीभगवानुवाच*

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यतेऽशुभात् ॥ १ ॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्श्वसन्स्वपन् ॥ ७ ॥

प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ८ ॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ९ ॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ १० ॥

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ ११ ॥

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १२ ॥

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १३ ॥

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १४ ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ १५ ॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थितः ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ १६ ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १७ ॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ १८ ॥

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १९ ॥

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २० ॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २१ ॥

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २२ ॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २३ ॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २४ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*राजविद्यागीता* नाम सप्तदशोऽध्यायः ॥

---

अथ

परमहंसगीता नाम

## अष्टादशोऽध्यायः ।

श्रीभगवानुवाच :—

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १ ॥

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ २ ॥

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ ३ ॥

सुखं त्विदानीं त्रिविधं श्रुणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ४ ॥

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ५ ॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ६ ॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ७ ॥

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्यायुक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ८ ॥

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ९ ॥

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ १० ॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ११ ॥

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ १२ ॥

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ १३ ॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ १४ ॥

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ १५ ॥

इन्द्रियाणां हि चरतां यन्मनोऽनु विधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ १६ ॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ १७ ॥

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ १८ ॥

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ १९ ॥

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ २० ॥

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ २१ ॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ २२ ॥

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ २३ ॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ २४ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम् ।
***परमहंसगीता*** नामाष्टादशोऽध्यायः

---

अथ

संन्यासगीतानाम

## एकोनविंशोऽध्यायः ।

---

*अर्जुन उवाच*

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

*श्रीभगवानुवाच*

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ४ ॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ५ ॥

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ ६ ॥

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ ७ ॥

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥ ८ ॥

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ ९ ॥

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ १० ॥

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥ ११ ॥

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ १२ ॥

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ १३ ॥

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ १४ ॥

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ १५ ॥

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ १६ ॥

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १७ ॥

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ १८ ॥

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १९ ॥

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ २० ॥

धूमेनाऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ २१ ॥

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ २२ ॥

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ २३ ॥

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ २४ ॥

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ २५ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*संन्यासगीता* नामैकोनविंशोऽध्यायः ॥

---

अथ

आत्मगीता नाम

## विंशोऽध्यायः ।

---

*अर्जुन उवाच*

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १ ॥

श्रीभगवानुवाच

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ २ ॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ३ ॥

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ ४ ॥

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ ५ ॥

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ ६ ॥

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ७ ॥

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ८ ॥

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ ९ ॥

यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।
तद्वै देवा उपासते तस्मात्सूर्यो विराजते ॥ १० ॥

शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ११ ॥

तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपसि तापनम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १२ ॥

ईशानः सर्वभूतेषु हविर्भूतमकल्मषम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १३ ॥

पूर्णात्पूर्णान्युद्धरन्ति पूर्णात्पूर्णानि चक्रिरे ।
हरन्ति पूर्णात्पूर्णानि पूर्णमेवावशिष्यते ॥ १४ ॥

तस्माद्वै वायुरायातः तस्मिंश्च प्रयतः सदा ।
तस्मादग्निश्च सोमश्च तस्मिंश्च प्राणआततः ॥ १५ ॥

सर्वमेव ततोविद्यात्तत्तद्वक्तुं न शक्नुमः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १६ ॥

निर्लिङ्गमचलं शुद्धं सर्वद्वन्द्वविवर्जितम् ।
कोह्येवमन्तरात्मानं ब्राह्मणो हन्तुमर्हति ॥ १७ ॥

योऽन्यथा सन्तमात्मानं अन्यथा प्रतिपद्यते ।
किंतेन न कृतं पापं चोरेणात्मापहारिणा ॥ १८ ॥

कामानुसारी पुरुषः कामाननुविनश्यति ।
कामान् व्युदस्य धुनुते यत्किंचित्पुरुषो रजः ॥ १९ ॥

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ २० ॥

उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ २१ ॥

बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ २२ ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २३ ॥

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥ २४ ॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
च्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ २५ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम् ।

*आत्मगीता* नाम विंशोऽध्यायः

अथ

प्रकृतिगीता नाम

# एकविंशोऽध्यायः ।

---

*अर्जुन उवाच*

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १ ॥

*श्रीभगवानुवाच*

इदं शरीरं कौन्तेय क्षेत्रमित्याभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ २ ॥

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ ३ ॥

तत्क्षेत्रं यच्च यादृक् च यद्विकारियतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ४ ॥

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ५ ॥

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ६ ॥

इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ७ ॥

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ ८ ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ९ ॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥ १० ॥

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ११ ॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ १२ ॥

अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ १३ ॥

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १४ ॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ १५ ॥

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ १६ ॥

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ १७ ॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ १८ ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ १९ ॥

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २० ॥

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ २१ ॥

यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ २२ ॥

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ २३ ॥

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ २४ ॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ २५ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*प्रकृतिगीता* नामैकविंशोऽध्यायः

---

अथ

कर्मगीता नाम

## द्वाविंशोऽध्यायः ।

---

### *अर्जुन उवाच*

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥

*श्रीभगवानुवाच*

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ २ ॥

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ३ ॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४ ॥

भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ५ ॥

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ ६ ॥

सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ ७ ॥

शनैःशनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ ८ ॥

यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ९ ॥

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ १० ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥ ११ ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुध्वा प्राणायामपरायणाः ॥ १२ ॥

अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ १३ ॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ १४ ॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ १५ ॥

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ १६ ॥

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ १७ ॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ १८ ॥

कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ १९ ॥

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ २० ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसङ्ग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥ २१ ॥

तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २२ ॥

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २३ ॥

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्राऽपि च ते न प्रसिद्धयेदकर्मणः ॥ २४ ॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २५ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*कर्मगीता* नाम द्वाविंशोऽध्यायः ॥

---

अथ

भक्तिगीता नाम

# त्रयोविंशोऽध्यायः ।

---

*श्रीभगवानुवाच*

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ १ ॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २ ॥

यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ ३ ॥

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ ४ ॥

नमस्कारेण हविषा स्वाध्यायैरौषधैरपि ।
पूजा स्याद्देवतानां हि यथा शास्त्रनिदर्शनम् ॥ ५ ॥

इष्टापूर्तादसाधूनां विदुषां जायते प्रजा ।
लुब्धेभ्यो जायते लुब्धः समेभ्यो जायते समः ॥ ६ ॥

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ ७ ॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ८ ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ ९ ॥

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ १० ॥

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ११ ॥

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १२ ॥

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥ १३ ॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १४ ॥

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १५ ॥

समः शत्रौ च मित्रे च तथा मानपमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १६ ॥

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येनकेनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १७ ॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ १८ ॥

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ २० ॥

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ २१ ॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ २२ ॥

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ २३ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ २४ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम् ।
*भक्तिगीता* नाम त्रयोविंशोऽध्यायः

अथ

ज्ञानगीता नाम

# चतुर्विंशोऽध्यायः ।

---

*श्रीभगवानुवाच*

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ १ ॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ २ ॥

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ ३ ॥

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥ ४ ॥

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ५ ॥

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ॥ ६ ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ७ ॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥ ८ ॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ ९ ॥

ते तं भुक्त्वा स्वर्गलोकं विशालम्
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्नाः
गतागतं कामकामा लभन्ते ॥ १० ॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ १२ ॥

योगसंन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ १३ ॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ १४ ॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ १५ ॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ १६ ॥

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ १७ ॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ १८ ॥

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ १९ ॥

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ २० ॥

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ २१ ॥

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ २२ ॥

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २३ ॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ २४ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम्
*ज्ञानगीता* नाम चतुर्विंशोऽध्यायः ।

---

अथ
योगगीता नाम
## पञ्चविंशोऽध्यायः ।

---

### *अर्जुन उवाच*

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥

### *श्रीभगवानुवाच*

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिता प्रत्यनीकेषु योधाः ॥ २ ॥

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ ३ ॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४ ॥

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ५ ॥

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ६ ॥

तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ७ ॥

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ ८ ॥

युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ ९ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ १० ॥

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ११ ॥

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां मतिम् ॥ १२ ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १३ ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १४ ॥

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ १५ ॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ १६ ॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ १७ ॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥ १८ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ १९ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ २० ॥

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २१ ॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ २२ ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ २३ ॥

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ २४ ॥

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ २५ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम् ॥
*योगगीता* नाम पञ्चविंशोऽध्यायः

---

अथ

ब्रह्मस्तुतिर्नाम

## षड्विंशोऽध्यायः ।

---

*श्रीभगवानुवाच*

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ १ ॥

अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ २ ॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ ३ ॥

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥ ४ ॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ ५ ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ ६ ॥

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ७ ॥

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ८ ॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ९ ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ १० ॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ ११ ॥

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १२ ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ १३ ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ १४ ॥

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ १५ ॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ १६ ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ १७ ॥

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ १८ ॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ १९ ॥

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ २० ॥

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ २१ ॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥ २२ ॥

स एवाऽयं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ २३ ॥

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २४ ॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥ २५ ॥

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ २६ ॥

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयम् ॥ २७ ॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ २८ ॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ २९ ॥

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ३० ॥

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनञ्जय ॥ ३१ ॥

*अर्जुन उवाच*

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ ३२ ॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ ३३ ॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ ३४ ॥

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ ३५ ॥

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ ३६ ॥

त्वमक्षरं परमं वेदितव्यम्
  त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
  सनातनस्त्वं पुरुषो मतो मे ॥ ३७ ॥

अमी हि त्वां सुरसङ्घा विशन्ति
  केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः
  स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ ३८ ॥

स्थाने हृषीकेश तव प्रकीर्त्या
  जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
  सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३९ ॥

कस्माच्च ते न नमेरन्महात्मन्
  गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
  त्वमक्षरं सदसत्तत्परं यत् ॥ ४० ॥

त्वमादिदेवः पुरुषः पुराण-
  स्त्वमस्य विश्वस्य परं निधानम् ।

वेत्ताऽसि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ४१ ॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ४२ ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वम्
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४३ ॥

सखेति मत्वा प्रसभं यदुक्तम्
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदम्
मया प्रसादात्प्रणयेन वापि ॥ ४४ ॥

यच्चाऽवहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाऽप्यच्युत तत्समक्षम्
तत्क्षामये त्वामहमप्रमेयम् ॥ ४५ ॥

पिताऽसि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभावः ॥ ४६ ॥

तस्मात्प्रणम्य प्रणिधाय कायम्
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ४७ ॥

उवाच : ——
नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ४८ ॥

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ४९ ॥

लब्ध्वा वरन्तु कौन्तेयो मेने जयमिवात्मनः ।
आरुरोह ततः पार्थो रथं परमसंमतम् ॥ ५० ॥

शृणु राजन्नवहितः श्रुत्वा चैवावधारय ।
नैव मन्त्रकृतं किं चिन्नैव मायां तथाविधाम् ॥ ५१ ॥

न वै विभीषिकां कांचिद्राजन्कुर्वन्ति पाण्डवाः ।
युध्यन्ति ते यथान्यायं शक्तिमन्तश्च संयुगे ॥ ५२ ॥

धर्मेण सर्वकार्याणि जीवितादीनि भारत ।
आरभन्ते सदा पार्थाः प्रार्थयाना महद्यशः ॥ ५३ ॥

न ते युद्धान्निवर्तन्ते धर्मोपेता महाबलाः ।
श्रिया परमया युक्ता यतो धर्मस्ततो जयः ॥ ५४ ॥

तं धर्मविग्रहं देवं शुद्धं नारायणं प्रभुम् ।
कृष्णं ब्रह्मा चैवमेव तुष्टाव परया धिया ॥ ५५ ॥

जय विश्व महादेव जय लोकहिते रत ।
जय योगीश्वर विभो जय योगपरावर ॥ ५६ ॥

पद्मगर्भ विशालाक्ष जय लोकेश्वरेश्वर ।
भूतभव्यभवन्नाथ जय सौम्यात्मजात्मज ॥ ५७ ॥

असङ्ख्येयगुणाधार जय सर्वपरायण ।
नारायण सुदुष्पार जय शार्ङ्गधनुर्धर ॥ ५८ ॥

जय सर्वगुणोपेत विश्वमूर्ते निरामय ।
विश्वेश्वर महाबाहो जय लोकार्थतत्पर ॥ ५९ ॥

महोरगवराहाद्य हरिकेश विभो जय ।
हरिवासदिशामीश विश्ववासामिताव्यय ॥ ६० ॥

व्यक्ताव्यक्तामितस्थान नियतेन्द्रिय सत्क्रिय ।
असङ्ख्येयात्मभावज्ञ जय गंभीर कामद ॥ ६१ ॥

अनन्त विदित ब्रह्मन्नित्यभूतविभावन ।
कृतकार्य कृतप्रज्ञ धर्मज्ञ विजयावह ॥ ६२ ॥

गुह्यात्मन्सर्वयोगात्मन्स्फुटसंभूतसंभव ।
भूताद्य लोकतत्त्वेश जय भूतविभावन ॥ ६३ ॥

आत्मयोने महाभाग कल्पसंक्षेपतत्पर ।
उद्भावनमनोभाव जय ब्रह्म जयप्रिय ॥ ६४ ॥

निसर्गसर्गनिरत कामेश परमेश्वर ।
अमृतोद्भवसद्भाव मुक्तात्मन्विजयप्रद ॥ ६५ ॥

प्रजापतिपते देव पद्मनाभ महाबल ।
आत्मभूतमहाभूत सत्वात्मञ्जय सर्वदा ॥ ६६ ॥

पादौ तव धरा देवी दिशो बाहू दिवं शिरः ।
मूर्तिस्तेऽहं सुराः कायश्चन्द्रादित्यौ च चक्षुषी ॥ ६७ ॥

बलं तपश्च सत्यं च कर्म धर्मात्मकं तव ।
तेजोऽग्निः पवनः श्वास आपस्ते स्वेदसंभवाः ॥ ६८ ॥

अश्विनौ श्रवणौ नित्यं देवी जिह्वा सरस्वती ।
वेदाः संस्कारनिष्ठा हि त्वयीदं जगदाश्रितम् ॥ ६९ ॥

न संख्यानं परीमाणं न तेजो न पराक्रमम् ।
न बलं योगयोगीश जानीमस्ते परन्तप ॥ ७० ॥

त्वद्भक्तिनिरता देव नियमैस्त्वां समाश्रिताः ।
अर्चयामः सदा विष्णो परमेशं महेश्वरम् ॥ ७१ ॥

Acc No 38710



त्वं गतिः सर्वभूतानां त्वं नेता त्वं जगद्गुरुः ।
त्वत्प्रसादेन देवेश सुखिनो विबुधाः सदा ॥ ७२ ॥

धर्मसंस्थापनार्थाय दैत्यानाञ्च वधाय च ।
जगतो धारणार्थाय विज्ञाप्यं कुरु मे विभो ॥ ७३ ॥

यत्तत्परमकं गुह्यं त्वत्प्रसादादिदं विभो ।
वासुदेव तदेतत्ते मयोद्गीतं यथातथम् ॥ ७४ ॥

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥

राजन्संस्मृत्य संस्मृत्य संवादमिदमद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

इति श्रीभगवद्गीतायां योगब्रह्मविद्यायाम् ॥
*ब्रह्मस्तुतिर्नाम* षड्विंशोऽध्यायः ।
संपूर्णेयं श्रीभगवद्गीता

ॐ

# INDEX.

*A.* GEETA.—The present Edition of the Suddha Dharma Mandalam.

*B.* GEETA.—The Current Geeta.

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 1 | 1 | 1 | 1 |
| 2 | 2 | 1 | 2 |
| 3 | 3 | 1 | 3 |
| 4 | 4 | 1 | 10 |
| 5 | 5 | 1 | 11 |
| 6 | 6 | Stanzas from 6to31 of this chapter are found in the 23rd chapter of Bheeshma parva. | |
| 7 | 7 | | |
| 8 | 8 | | |
| 9 | 9 | | |
| 10 | 10 | | |
| 11 | 11 | | |
| 12 | 12 | | |
| 13 | 13 | | |
| 14 | 14 | | |
| 15 | 15 | | |
| 16 | 16 | | |
| 17 | 17 | | |
| 18 | 18 | | |
| 19 | 19 | | |
| 20 | 20 | Stanzas from 6to31 of this chapter are found in the 23rd chapter of Bheeshma parva. | |
| 21 | 21 | | |
| 22 | 22 | | |
| 23 | 23 | | |
| 24 | 24 | | |
| 25 | 25 | | |
| 26 | 26 | | |
| 27 | 27 | | |
| 28 | 28 | | |
| 29 | 29 | | |
| 30 | 30 | | |
| 31 | 31 | | |
| 32 | 32 | 1 | 14 |
| 33 | 33 | 1 | 15 |
| 34 | 34 | 1 | 16 |
| 35 | 35 | 1 | 17 |
| 36 | 36 | 1 | 18 |
| 37 | 37 | 1 | 19 |
| 38 | 38 | 1 | 20 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|
| 39 | 39 | 1 | 21 |
| 40 | 40 | 1 | 22 |
| 41 | 41 | 1 | 23 |
| 42 | 42 | 1 | 24 |
| 43 | 43 | 1 | 25 |
| 44 | 44 | 1 | 26 |
| 45 | 45 | 1 | 27 |
| 46 | 46 | 1 | 28 |
| 47 | 47 | 1 | 29 |
| 48 | 48 | 1 | 30 |
| 49 | 49 | 1 | 31 |
| 50 | 50 | 1 | 45 |
| 51 | 51 | 2 | 5 |
| 52 | 52 | 2 | 6 |
| 53 | 53 | 2 | 7 |
| 54 | 54 | 1 | 47 |
| | II | | |
| 55 | 1 | 2 | 10 |
| 56 | 2 | 2 | 11 |
| 57 | 3 | 2 | 2 |
| 58 | 4 | Stanzas from 4 to 5 of this chapter are found in the Anusasana parva chapter 43. | |
| 59 | 5 | | |
| 60 | 6 | | |
| 61 | 7 | | |
| 62 | 8 | | |
| 63 | 9 | | |
| 64 | 10 | | |
| 65 | 11 | | |
| 66 | 12 | Stanzas from 4to25 of this chapter are found in the Anusasana parva Chapter 43. | |
| 67 | 13 | | |
| 68 | 14 | | |
| 69 | 15 | | |
| 70 | 16 | | |
| 71 | 17 | | |
| 72 | 18 | | |
| 73 | 19 | | |
| 74 | 20 | | |
| 75 | 21 | | |
| 76 | 22 | | |
| 77 | 23 | | |
| 78 | 24 | | |
| 79 | 25 | | |
| | III | | |
| 80 | 1 | 10 | 17 |
| 81 | 2 | 10 | 1 |
| 82 | 3 | 4 | 6 |
| 83 | 4 | 9 | 29 |
| 84 | 5 | 7 | 26 |
| 85 | 6 | 14 | 27 |
| 86 | 7 | 10 | 21 |
| 87 | 8 | 9 | 24 |
| 88 | 9 | 10 | 2 |
| 89 | 10 | 7 | 25 |
| 90 | 11 | 9 | 12 |
| 91 | 12 | 9 | 11 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas | Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|---|---|---|---|
| 92 | 13 | 4 | 7 | 118 | 14 | 5 | 20 |
| 93 | 14 | 4 | 8 | 119 | 15 | 12 | 3 |
| 94 | 15 | 3 | 22 | 120 | 16 | 12 | 4 |
| 95 | 16 | 3 | 23 | 121 | 17 | 12 | 5 |
| 96 | 17 | 3 | 24 | 122 | 18 | 4 | 28 |
| 97 | 18 | 4 | 5 | 123 | 19 | 4 | 18 |
| 98 | 19 | 4 | 10 | 124 | 20 | 7 | 3 |
| 99 | 20 | 10 | 9 | 125 | 21 | 6 | 32 |
| 100 | 21 | 10 | 10 | 126 | 22 | 4 | 23 |
| 101 | 22 | 9 | 13 | 127 | 23 | 5 | 18 |
| 102 | 23 | 9 | 14 | 128 | 24 | 4 | 11 |
| 103 | 24 | 9 | 22 | 129 | 25 | 10 | 3 |
| 104 | 25 | 4 | 9 | 130 | 26 | 5 | 21 |
| | IV | | | | V | | |
| 105 | 1 | 12 | 1 | 131 | 1 | 6 | 33 |
| 106 | 2 | 6 | 39 | 132 | 2 | 2 | 54 |
| 107 | 3 | 10 | 8 | 133 | 3 | 7 | 1 |
| 108 | 4 | 10 | 4 | 134 | 4 | 6 | 36 |
| 109 | 5 | 10 | 5 | 135 | 5 | 2 | 62 |
| 110 | 6 | 10 | 6 | 136 | 6 | 2 | 63 |
| 111 | 7 | 4 | 13 | 137 | 7 | 2 | 64 |
| 112 | 8 | 7 | 16 | 138 | 8 | 2 | 65 |
| 113 | 9 | 7 | 17 | 139 | 9 | 13 | 7 |
| 114 | 10 | 7 | 19 | 140 | 10 | 13 | 8 |
| 115 | 11 | 5 | 16 | 141 | 11 | 13 | 9 |
| 116 | 12 | 18 | 49 | 142 | 12 | 13 | 10 |
| 117 | 13 | 4 | 19 | 143 | 13 | 13 | 11 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 144 | 14 | 6 | 31 |
| 145 | 15 | 6 | 30 |
| 146 | 16 | 9 | 12 |
| 147 | 17 | 6 | 26 |
| 148 | 18 | 2 | 55 |
| 149 | 19 | 2 | 56 |
| 150 | 20 | 2 | 57 |
| 151 | 21 | 2 | 58 |
| 152 | 22 | 2 | 60 |
| 153 | 23 | 2 | 61 |
| 154 | 24 | 5 | 23 |
| 155 | 25 | 3 | 42 |
| 156 | 26 | 3 | 43 |
| | VI | | |
| 157 | 1 | 3 | 36 |
| 158 | 2 | 18 | 13 |
| 159 | 3 | 18 | 14 |
| 160 | 4 | 18 | 15 |
| 161 | 5 | 18 | 16 |
| 162 | 6 | 3 | 28 |
| 163 | 7 | 18 | 17 |
| 164 | 8 | 3 | 3 |
| 165 | 9 | 5 | 4 |
| 166 | 10 | 5 | 5 |
| 167 | 11 | 9 | 17 |
| 168 | 12 | 9 | 8 |
| 169 | 13 | 9 | 9 |

| Serial No. | A. Bhagawad Geeta. Slokas | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|
| 170 | 14 | 9 | 18 |
| 171 | 15 | 13 | 26 |
| 172 | 16 | 9 | 19 |
| 173 | 17 | 9 | 15 |
| 174 | 18 | 7 | 15 |
| 175 | 19 | 15 | 11 |
| 176 | 20 | 15 | 13 |
| 177 | 21 | 15 | 14 |
| 178 | 22 | 13 | 20 |
| 179 | 23 | 7 | 27 |
| 180 | 24 | 7 | 28 |
| 181 | 25 | 14 | 19 |
| | VII | | |
| 182 | 1 | This is found somewhere in Bheeshma parva. | |
| 183 | 2 | 13 | 12 |
| 184 | 3 | 13 | 13 |
| 185 | 4 | 13 | 14 |
| 186 | 5 | 13 | 15 |
| 187 | 6 | 13 | 16 |
| 188 | 7 | 13 | 17 |
| 189 | 8 | 13 | 30 |
| 190 | 9 | 18 | 56 |
| 191 | 10 | 15 | 1 |
| 192 | 11 | 15 | 2 |
| 193 | 12 | 15 | 3 |
| 194 | 13 | 15 | 4 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas | Serial No. | A. Bhagawad Geeta. Slokas | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|---|---|---|---|
| 195 | 14 | 15 | 5 | 221 | 15 | 16 | 14 |
| 196 | 15 | 9 | 32 | 222 | 16 | 16 | 15 |
| 197 | 16 | 9 | 33 | 223 | 17 | 16 | 16 |
| 198 | 17 | 9 | 20 | 224 | 18 | 16 | 17 |
| 199 | 18 | 13 | 27 | 225 | 19 | 16 | 18 |
| 200 | 19 | 15 | 7 | 226 | 20 | 16 | 19 |
| 201 | 20 | 15 | 8 | 227 | 21 | 16 | 20 |
| 202 | 21 | 15 | 9 | 228 | 22 | 16 | 21 |
| 203 | 22 | 12 | 6 | 229 | 23 | 16 | 22 |
| 204 | 23 | 12 | 7 | 230 | 24 | 16 | 23 |
| 205 | 24 | 4 | 14 | 231 | 25 | 16 | 24 |
| 206 | 25 | 8 | 28 | | | | |
| | | | | | IX | | |
| | VIII | | | 232 | 1 | 17 | 1 |
| 207 | 1 | 14 | 21 | 233 | 2 | 17 | 2 |
| 208 | 2 | 16 | 1 | 234 | 3 | 17 | 3 |
| 209 | 3 | 16 | 2 | 235 | 4 | 17 | 4 |
| 210 | 4 | 16 | 3 | 236 | 5 | 17 | 5 |
| 211 | 5 | 16 | 4 | 237 | 6 | 17 | 6 |
| 212 | 6 | 16 | 5 | 238 | 7 | 17 | 7 |
| 213 | 7 | 16 | 6 | 239 | 8 | 17 | 8 |
| 214 | 8 | 16 | 7 | 240 | 9 | 17 | 9 |
| 215 | 9 | 16 | 8 | 241 | 10 | 17 | 10 |
| 216 | 10 | 16 | 9 | 242 | 11 | 17 | 11 |
| 217 | 11 | 16 | 10 | 243 | 12 | 17 | 12 |
| 218 | 12 | 16 | 11 | 244 | 13 | 17 | 13 |
| 219 | 13 | 16 | 12 | 245 | 14 | 17 | 14 |
| 220 | 14 | 16 | 13 | 246 | 15 | 17 | 15 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 247 | 16 | 17 | 16 |
| 248 | 17 | 17 | 17 |
| 249 | 18 | 17 | 18 |
| 250 | 19 | 17 | 19 |
| 251 | 20 | 17 | 20 |
| 252 | 21 | 17 | 21 |
| 253 | 22 | 17 | 22 |
| 254 | 23 | 17 | 24 |
| 255 | 24 | 17 | 26 |
| 256 | 25 | 17 | 28 |
| | | X | |
| 257 | 1 | 7 | 13 |
| 258 | 2 | 7 | 14 |
| 259 | 3 | 14 | 5 |
| 260 | 4 | 14 | 6 |
| 261 | 5 | 14 | 7 |
| 262 | 6 | 14 | 8 |
| 263 | 7 | 14 | 9 |
| 264 | 8 | 14 | 10 |
| 265 | 9 | 18 | 19 |
| 266 | 10 | 18 | 20 |
| 267 | 11 | 18 | 21 |
| 268 | 12 | 18 | 22 |
| 269 | 13 | 18 | 23 |
| 270 | 14 | 18 | 24 |
| 271 | 15 | 18 | 25 |
| 272 | 16 | 18 | 26 |
| 273 | 17 | 18 | 27 |

| Serial No. | A. Bhagawad Geeta. Slokas | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 274 | 18 | 18 | 28 |
| 275 | 19 | 18 | 40 |
| 276 | 20 | 14 | 17 |
| 277 | 21 | 14 | 18 |
| 278 | 22 | 3 | 29 |
| 279 | 23 | 2 | 45 |
| 280 | 24 | 14 | 26 |
| | | XI | |
| 281 | 1 | 18 | 50 |
| 282 | 2 | 18 | 51 |
| 283 | 3 | 18 | 52 |
| 284 | 4 | 18 | 53 |
| 285 | 5 | 14 | 20 |
| 286 | 6 | 18 | 29 |
| 287 | 7 | 18 | 30 |
| 288 | 8 | 18 | 31 |
| 289 | 9 | 18 | 32 |
| 290 | 10 | 18 | 33 |
| 291 | 11 | 18 | 34 |
| 292 | 12 | 18 | 35 |
| 293 | 13 | 14 | 11 |
| 294 | 14 | 14 | 12 |
| 295 | 15 | 14 | 13 |
| 296 | 16 | 14 | 14 |
| 297 | 17 | 14 | 15 |
| 298 | 18 | 8 | 23 |
| 299 | 19 | 8 | 26 |
| 300 | 20 | 8 | 25 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 301 | 21 | 8 | 24 |
| 302 | 22 | 8 | 27 |
| 303 | 23 | 8 | 16 |
| 304 | 24 | 8 | 15 |

## XII

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 305 | 1 | 11 | 3 |
| 306 | 2 | 11 | 4 |
| 307 | 3 | 7 | 2 |
| 308 | 4 | 7 | 4 |
| 309 | 5 | 7 | 5 |
| 310 | 6 | 7 | 6 |
| 311 | 7 | 7 | 7 |
| 312 | 8 | 7 | 10 |
| 313 | 9 | 7 | 12 |
| 314 | 10 | 7 | 11 |
| 315 | 11 | 7 | 8 |
| 316 | 12 | 7 | 9 |
| 317 | 13 | 11 | 5 |
| 318 | 14 | 11 | 6 |
| 319 | 15 | 11 | 7 |
| 320 | 16 | 11 | 8 |
| 321 | 17 | 11 | 9 |
| 322 | 18 | 11 | 10 |
| 323 | 19 | 11 | 11 |
| 324 | 20 | 11 | 12 |
| 325 | 21 | 11 | 13 |
| 326 | 22 | 11 | 14 |

| Serial No. | A. Bhagawad Geeta. Slokas | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|
| 327 | 23 | 11 | 15 |
| 328 | 24 | 11 | 16 |
| 329 | 25 | 11 | 17 |
| 330 | 26 | 11 | 45 |
| 331 | 27 | 11 | 28 |
| 332 | 28 | 11 | 46 |
| 333 | 29 | 11 | 47 |
| 334 | 30 | 11 | 34 |
| 335 | 31 | 11 | 33 |
| 336 | 32 | 11 | 49 |
| 337 | 33 | 11 | 50 |
| 338 | 34 | 11 | 51 |
| 339 | 35 | 11 | 52 |
| 340 | 36 | 11 | 48 |
| 341 | 37 | 11 | 54 |
| 342 | 38 | 10 | 42 |
| 343 | 39 | 18 | 55 |
| 344 | 40 | 8 | 7 |

## XIII

| Serial No. | A. Bhagawad Geeta. Slokas | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|
| 345 | 1 | 10 | 15 |
| 346 | 2 | 10 | 16 |
| 347 | 3 | 10 | 19 |
| 348 | 4 | 10 | 32 |
| 349 | 5 | 10 | 22 |
| 350 | 6 | 10 | 23 |
| 351 | 7 | 10 | 24 |
| 352 | 8 | 10 | 26 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | B. Bhagawad Geeta and Mahabarata portion. Slokas |
|---|---|---|---|
| 353 | 9 | 10 | 27 |
| 354 | 10 | 10 | 30 |
| 355 | 11 | 10 | 29 |
| 356 | 12 | 10 | 36 |
| 357 | 13 | 10 | 35 |
| 358 | 14 | 10 | 34 |
| 359 | 15 | 10 | 31 |
| 360 | 16 | 10 | 28 |
| 361 | 17 | 10 | 37 |
| 362 | 18 | 15 | 12 |
| 363 | 19 | 10 | 39 |
| 364 | 20 | 10 | 40 |
| 365 | 21 | 14 | 22 |
| 366 | 22 | 14 | 23 |
| 367 | 23 | 14 | 24 |
| 368 | 24 | 14 | 25 |
| 369 | 25 | 10 | 7 |
| 370 | 26 | 8 | 8 |
| | XIV | | |
| 371 | 1 | 6 | 34 |
| 372 | 2 | 6 | 37 |
| 373 | 3 | 6 | 35 |
| 374 | 4 | 6 | 3 |
| 375 | 5 | 6 | 10 |
| 376 | 6 | 6 | 11 |
| 377 | 7 | 6 | 12 |
| 378 | 8 | 6 | 13 |

| Serial No. | A. Bhagawad Geeta. Slokas | B. Bhagawad Geeta and Mahabarata portion. Chap. | B. Bhagawad Geeta and Mahabarata portion. Slokas. |
|---|---|---|---|
| 379 | 9 | 6 | 14 |
| 380 | 10 | 6 | 16 |
| 381 | 11 | 6 | 17 |
| 382 | 12 | 6 | 18 |
| 383 | 13 | 6 | 19 |
| 384 | 14 | 6 | 20 |
| 385 | 15 | 6 | 21 |
| 386 | 16 | 6 | 22 |
| 387 | 17 | 6 | 23 |
| 388 | 18 | 6 | 28 |
| 389 | 19 | 6 | 8 |
| 390 | 20 | 6 | 40 |
| 391 | 21 | 6 | 41 |
| 392 | 22 | 6 | 42 |
| 393 | 23 | 6 | 43 |
| 394 | 24 | 6 | 44 |
| 395 | 25 | 6 | 45 |
| 396 | 26 | 6 | 47 |
| | XV | | |
| 397 | 1 | 14 | 1 |
| 398 | 2 | 14 | 2 |
| 399 | 3 | 14 | 3 |
| 400 | 4 | 14 | 4 |
| 401 | 5 | 15 | 16 |
| 402 | 6 | 15 | 17 |
| 403 | 7 | 15 | 18 |
| 404 | 8 | 15 | 19 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | B. Bhagawad Geeta and Mahabarata portion. Slokas |
|---|---|---|---|
| 405 | 9 | 13 | 22 |
| 406 | 10 | 13 | 31 |
| 407 | 11 | 9 | 10 |
| 408 | 12 | 7 | 24 |
| 409 | 13 | 9 | 25 |
| 410 | 14 | 9 | 7 |
| 411 | 15 | 15 | 15 |
| 412 | 16 | 2 | 17 |
| 413 | 17 | 2 | 19 |
| 414 | 18 | 2 | 21 |
| 415 | 19 | 2 | 24 |
| 416 | 20 | 2 | 25 |
| 417 | 21 | 18 | 57 |
| 418 | 22 | 18 | 58 |
| 419 | 23 | 3 | 30 |
| 420 | 24 | 15 | 6 |
| | XVI | | |
| 421 | 1 | 8 | 1 |
| 422 | 2 | 8 | 2 |
| 423 | 3 | 8 | 3 |
| 424 | 4 | 8 | 4 |
| 425 | 5 | 8 | 5 |
| 426 | 6 | 8 | 6 |
| 427 | 7 | 8 | 14 |
| 428 | 8 | 8 | 9 |
| 429 | 9 | 8 | 10 |
| 430 | 10 | 8 | 11 |
| 431 | 11 | 8 | 17 |
| 432 | 12 | 8 | 18 |
| 433 | 13 | 8 | 19 |
| 434 | 14 | 8 | 20 |
| 435 | 15 | 8 | 21 |
| 436 | 16 | 8 | 22 |
| 437 | 17 | 3 | 12 |
| 438 | 18 | 3 | 13 |
| 439 | 19 | 3 | 14 |
| 440 | 20 | 3 | 15 |
| 441 | 21 | 3 | 16 |
| 442 | 22 | 2 | 59 |
| 443 | 23 | 5 | 19 |
| 444 | 24 | 5 | 22 |
| 445 | 25 | 7 | 30 |
| 446 | 26 | 7 | 29 |
| | XVII | | |
| 447 | 1 | 9 | 1 |
| 448 | 2 | 9 | 2 |
| 449 | 3 | 9 | 3 |
| 450 | 4 | 9 | 4 |
| 451 | 5 | 9 | 5 |
| 452 | 6 | 9 | 6 |
| 453 | 7 | 5 | 8 |
| 454 | 8 | 5 | 9 |
| 455 | 9 | 5 | 10 |
| 456 | 10 | 5 | 11 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 457 | 11 | 5 | 12 |
| 458 | 12 | 5 | 13 |
| 459 | 13 | 5 | 14 |
| 460 | 14 | 5 | 15 |
| 461 | 15 | 12 | 8 |
| 462 | 16 | 12 | 9 |
| 463 | 17 | 12 | 10 |
| 464 | 18 | 12 | 11 |
| 465 | 19 | 12 | 12 |
| 466 | 20 | 5 | 25 |
| 467 | 21 | 5 | 26 |
| 468 | 22 | 5 | 27 |
| 469 | 23 | 5 | 28 |
| 470 | 24 | 5 | 29 |
| | XVIII | | |
| 471 | 1 | 2 | 16 |
| 472 | 2 | 2 | 38 |
| 473 | 3 | 14 | 16 |
| 474 | 4 | 18 | 36 |
| 475 | 5 | 18 | 37 |
| 476 | 6 | 18 | 38 |
| 477 | 7 | 18 | 39 |
| 478 | 8 | 3 | 39 |
| 479 | 9 | 2 | 48 |
| 480 | 10 | 2 | 49 |
| 481 | 11 | 2 | 51 |
| 482 | 12 | 2 | 40 |
| 483 | 13 | 2 | 52 |
| 484 | 14 | 2 | 53 |
| 485 | 15 | 2 | 66 |
| 486 | 16 | 2 | 67 |
| 487 | 17 | 2 | 68 |
| 488 | 18 | 2 | 69 |
| 489 | 19 | 3 | 4 |
| 490 | 20 | 3 | 5 |
| 491 | 21 | 3 | 6 |
| 492 | 22 | 3 | 7 |
| 493 | 23 | 2 | 71 |
| 494 | 24 | 2 | 72 |
| | XIX | | |
| 495 | 1 | 5 | 1 |
| 496 | 2 | 5 | 2 |
| 497 | 3 | 5 | 3 |
| 498 | 4 | 5 | 6 |
| 499 | 5 | 5 | 7 |
| 500 | 6 | 6 | 1 |
| 501 | 7 | 6 | 2 |
| 502 | 8 | 6 | 4 |
| 503 | 9 | 18 | 2 |
| 504 | 10 | 18 | 3 |
| 505 | 11 | 18 | 4 |
| 506 | 12 | 18 | 5 |
| 507 | 13 | 18 | 6 |
| 508 | 14 | 18 | 7 |
| 509 | 15 | 18 | 8 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 510 | 16 | 18 | 9 |
| 511 | 17 | 18 | 10 |
| 512 | 18 | 18 | 11 |
| 513 | 19 | 18 | 12 |
| 514 | 20 | 3 | 34 |
| 515 | 21 | 3 | 38 |
| 516 | 22 | 3 | 39 |
| 517 | 23 | 3 | 37 |
| 518 | 24 | 3 | 40 |
| 519 | 25 | 3 | 41 |

XX

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 520 | 1 | 10 | 18 |
| 521 | 2 | 18 | 45 |
| 522 | 3 | 18 | 46 |
| 523 | 4 | 2 | 12 |
| 524 | 5 | 13 | 19 |
| 525 | 6 | 13 | 21 |
| 526 | 7 | 13 | 33 |
| 527 | 8 | 13 | 32 |
| 528 | 9 | 13 | 23 |
| 529 | 10 | Stanzas from 10 to 16 are found in the Udyoga Parva Chapter 46. | |
| 530 | 11 | | |
| 631 | 12 | | |
| 532 | 13 | | |
| 533 | 14 | | |
| 534 | 15 | | |

| Serial No. | A. Bhagawad Geeta. Slokas | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|
| 535 | 16 | Stanzas from 17 to 19 are found in the Udyoga Parva chapter 42. | |
| 536 | 17 | | |
| 537 | 18 | | |
| 538 | 19 | | |
| 539 | 20 | 3 | 17 |
| 540 | 21 | 6 | 5 |
| 541 | 22 | 6 | 6 |
| 542 | 23 | 4 | 27 |
| 543 | 24 | 13 | 28 |
| 544 | 25 | 5 | 17 |

XXI

| Serial No. | A. Bhagawad Geeta. Slokas | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|
| 545 | 1 | 13 | 1 |
| 546 | 2 | 13 | 2 |
| 547 | 3 | 13 | 2 |
| 548 | 4 | 13 | 3 |
| 549 | 5 | 13 | 4 |
| 550 | 6 | 13 | 5 |
| 551 | 7 | 13 | 6 |
| 552 | 8 | 2 | 18 |
| 553 | 9 | 2 | 28 |
| 554 | 10 | 3 | 27 |
| 555 | 11 | 3 | 33 |
| 556 | 12 | 13 | 14 |
| 557 | 13 | 13 | 25 |
| 558 | 14 | 15 | 10 |
| 559 | 15 | 2 | 23 |
| 560 | 16 | 2 | 20 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 561 | 17 | 2 | 22 |
| 562 | 18 | 2 | 26 |
| 563 | 19 | 2 | 27 |
| 564 | 20 | 2 | 29 |
| 565 | 21 | 18 | 48 |
| 566 | 22 | 18 | 59 |
| 567 | 23 | 18 | 60 |
| 568 | 24 | 13 | 34 |
| 569 | 25 | 13 | 18 |
| | XXII | | |
| 570 | 1 | 3 | 1 |
| 571 | 2 | 13 | 29 |
| 572 | 3 | 2 | 42 |
| 573 | 4 | 2 | 43 |
| 574 | 5 | 2 | 44 |
| 575 | 6 | 4 | 12 |
| 576 | 7 | 6 | 24 |
| 577 | 8 | 6 | 25 |
| 578 | 9 | 2 | 46 |
| 579 | 10 | 4 | 25 |
| 580 | 11 | 4 | 26 |
| 581 | 12 | 4 | 29 |
| 582 | 13 | 4 | 30 |
| 583 | 14 | 4 | 31 |
| 584 | 15 | 4 | 32 |
| 585 | 16 | 18 | 41 |
| 586 | 17 | 18 | 42 |

| Serial No. | A. Bhagawad Geeta. Slokas | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|
| 587 | 18 | 18 | 43 |
| 588 | 19 | 18 | 44 |
| 589 | 20 | 2 | 47 |
| 590 | 21 | 3 | 20 |
| 591 | 22 | 17 | 25 |
| 592 | 23 | 17 | 27 |
| 593 | 24 | 3 | 8 |
| 594 | 25 | 4 | 21 |
| | XXIII | | |
| 595 | 1 | 12 | 2 |
| 596 | 2 | 7 | 22 |
| 597 | 3 | 7 | 21 |
| 598 | 4 | 7 | 20 |
| 599 | 5 | (Santi parva | |
| 600 | 6 | Mahabarata.) | |
| 601 | 7 | 9 | 23 |
| 602 | 8 | 9 | 26 |
| 603 | 9 | 9 | 27 |
| 604 | 10 | 9 | 30 |
| 605 | 11 | 9 | 31 |
| 606 | 12 | 12 | 13 |
| 607 | 13 | 12 | 14 |
| 608 | 14 | 12 | 15 |
| 609 | 15 | 12 | 17 |
| 610 | 16 | 12 | 18 |
| 611 | 17 | 12 | 19 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|
| 612 | 18 | 12 | 20 |
| 613 | 19 | 3 | 19 |
| 614 | 20 | 3 | 18 |
| 615 | 21 | 3 | 9 |
| 616 | 22 | 3 | 10 |
| 617 | 23 | 3 | 11 |
| 618 | 24 | 18 | 65 |
| | XXIV | | |
| 619 | 1 | 18 | 64 |
| 620 | 2 | 4 | 16 |
| 621 | 3 | 4 | 17 |
| 622 | 4 | 4 | 20 |
| 623 | 5 | 4 | 33 |
| 624 | 6 | 18 | 18 |
| 625 | 7 | 3 | 21 |
| 626 | 8 | 3 | 25 |
| 627 | 9 | 3 | 26 |
| 628 | 10 | 9 | 21 |
| 629 | 11 | 10 | 11 |
| 630 | 12 | 6 | 7 |
| 631 | 13 | 4 | 41 |
| 632 | 14 | 2 | 50 |
| 633 | 15 | 6 | 9 |
| 634 | 16 | 4 | 34 |
| 635 | 17 | 4 | 35 |
| 636 | 18 | 4 | 36 |
| 637 | 19 | 4 | 37 |
| 638 | 20 | 4 | 38 |
| 639 | 21 | 4 | 39 |
| 640 | 22 | 4 | 40 |
| 641 | 23 | 9 | 28 |
| 642 | 24 | 11 | 55 |
| | XXV | | |
| 643 | 1 | 18 | 21 |
| 644 | 2 | 11 | 32 |
| 645 | 3 | 2 | 15 |
| 646 | 4 | 2 | 41 |
| 647 | 5 | 2 | 70 |
| 648 | 6 | 4 | 24 |
| 649 | 7 | 4 | 42 |
| 650 | 8 | 5 | 24 |
| 651 | 9 | 6 | 15 |
| 652 | 10 | 6 | 27 |
| 653 | 11 | 6 | 46 |
| 654 | 12 | 7 | 18 |
| 655 | 13 | 8 | 12 |
| 656 | 14 | 8 | 13 |
| 657 | 15 | 10 | 20 |
| 658 | 16 | 10 | 25 |
| 659 | 17 | 10 | 33 |
| 660 | 18 | 10 | 41 |
| 661 | 19 | 10 | 38 |
| 662 | 20 | 9 | 34 |
| 663 | 21 | 17 | 23 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 664 | 22 | 18 | 54 |
| 665 | 23 | 18 | 61 |
| 666 | 24 | 18 | 62 |
| 667 | 25 | 18 | 66 |

XXVI

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas |
|---|---|---|---|
| 668 | 1 | 11 | 53 |
| 669 | 2 | 9 | 16 |
| 670 | 3 | 12 | 16 |
| 671 | 4 | 4 | 22 |
| 672 | 5 | 7 | 23 |
| 673 | 6 | 4 | 15 |
| 674 | 7 | 3 | 35 |
| 675 | 8 | 3 | 31 |
| 676 | 9 | 3 | 32 |
| 677 | 10 | 2 | 30 |
| 678 | 11 | 2 | 14 |
| 679 | 12 | 2 | 13 |
| 680 | 13 | 2 | 31 |
| 681 | 14 | 2 | 32 |
| 682 | 15 | 2 | 33 |
| 683 | 16 | 2 | 34 |
| 684 | 17 | 2 | 35 |
| 685 | 18 | 2 | 36 |
| 686 | 19 | 2 | 37 |
| 687 | 20 | 18 | 63 |
| 688 | 21 | 4 | 1 |

| Serial No. | A. Bhagawad Geeta. Slokas | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|
| 689 | 22 | 4 | 2 |
| 690 | 23 | 4 | 3 |
| 691 | 24 | 18 | 47 |
| 692 | 25 | 15 | 20 |
| 693 | 26 | 18 | 67 |
| 694 | 27 | 18 | 68 |
| 695 | 28 | 18 | 69 |
| 696 | 29 | 18 | 70 |
| 697 | 30 | 18 | 71 |
| 698 | 31 | 18 | 72 |
| 699 | 32 | 10 | 12 |
| 700 | 33 | 10 | 13 |
| 701 | 34 | 10 | 14 |
| 702 | 35 | 11 | 1 |
| 703 | 36 | 11 | 2 |
| 704 | 37 | 11 | 18 |
| 705 | 38 | 11 | 21 |
| 706 | 39 | 11 | 36 |
| 707 | 40 | 11 | 37 |
| 708 | 41 | 11 | 38 |
| 709 | 42 | 11 | 39 |
| 710 | 43 | 11 | 40 |
| 711 | 44 | 11 | 41 |
| 712 | 45 | 11 | 42 |
| 713 | 46 | 11 | 43 |
| 714 | 47 | 11 | 44 |
| 715 | 48 | 18 | 13 |
| 716 | 49 | 18 | 74 |

| Serial No. | A. Bhagawad Geeta. Slokas. | B. Bhagawad Geeta and Mahabarata portion. Chap. | Slokas. |
|---|---|---|---|
| Stanza 50 is found in the Beeshma Parva Chapter 50. | | | |
| 718 | 51 | Stanzas from 51 to 74 are found in the Beeshma Parva Chapter 65. | |
| 719 | 52 | | |
| 720 | 53 | | |
| 721 | 54 | | |
| 722 | 55 | | |
| 723 | 56 | | |
| 724 | 57 | | |
| 725 | 58 | | |
| 726 | 59 | | |
| 727 | 60 | | |
| 728 | 61 | | |
| 729 | 62 | | |
| 730 | 63 | | |
| 731 | 64 | Stanzas from 51 to 54 are found in the Beeshma Parva Chapter 65. | |
| 732 | 65 | | |
| 733 | 66 | | |
| 734 | 67 | | |
| 735 | 68 | | |
| 736 | 69 | | |
| 737 | 70 | | |
| 738 | 71 | | |
| 739 | 72 | | |
| 740 | 73 | | |
| 741 | 74 | | |
| 742 | 75 | 18 | 75 |
| 743 | 76 | 18 | 76 |
| 744 | 77 | 18 | 77 |
| 745 | 78 | 18 | 78 |

THIS INDEX IS PRINTED AT THE
MODERN PRINTING WORKS, MOUNT ROAD, MADRAS—1917.

